## अर्घ्यदानम्

या दिव्या इति मन्त्रेण विश्वेदेवा इदं शिवम् ।
वो अर्घ्यमिति लौकिक्या वाचाऽर्घ्यं समुपाहरेत् ॥
अस्त्वर्घ(र्घ्य) इति तेनोक्तो हस्ते शुद्धोदकं पुनः ।
दत्वा भक्त्याऽर्चत प्रार्थतेति पश्चात्क्रियाक्षतः ॥

अर्चयित्वाऽथ गन्धांश्च व्याहृतीभिरथाऽक्षतान् । धूपदीपौ चोपवीतद्वयं वस्त्रद्वयं पुनः ॥
कुशाद्यं भूषणानि पात्र शक्त्या सुचेतसा । प्रदत्तमिति सुस्थेन भावयेदेव सन्ततम् ॥

शक्त्या चेदेयमेव स्यात् शक्त्यभावे तु भावना ।
सर्वत्र व्याहृतिर्ज्ञेया दानमात्रेण सर्वतः ॥

संपूर्णमर्चनं चेति वाक्यमुक्त्वा ततः परम् । संकल्पसिद्धिरस्त्वेवं भवन्तः प्रब्रुवन्त्विति ॥
तदोत्तरं तथैव स्यादस्तु संकल्पसिद्धिरुत्तमा । यथाविध्यर्चितं चेति वाक्यं प्रत्युत्तरं ततः
अस्त्वित्येव च संप्रोक्तं ततो भवदनुज्ञया । पित्र्येऽर्चनं करिष्येति समनुज्ञाप्य तं ततः ॥
कुरुष्वेति तथाऽऽज्ञप्तः पितॄणामर्चनं चरेत् । पूर्ववन्निखिलं चात्र कथितं शास्त्रवेदिभिः ॥

परं त्विमान् विशेषोऽत्र कथितः शास्त्रवर्त्मना ।
अग्नेर्दक्षिणतो वापि द्विजानां पुरतोऽपि वा ॥
पात्रासादनकर्म स्यात् त्रीणि पात्राणि चात्र वै ।
स श्राद्धार्थे (?) प्रयोज्यानि पवित्रेषु कृतेषु हि ॥

उपरिष्टादधस्ताच्च प्रोक्ष्योद्धृत्य च पूर्ववत् । तिलान् विकीर्य तूष्णीकं तेषु पात्रेषु तत्परम्
पूर्ववज्जलमापूर्य तिलोऽसीति च मन्त्रतः । पितरं नामगोत्राभ्यां समुच्चार्य ततः पुनः ॥

इमान् लोकान् प्रीणया हि नः । स्वधा नम इत्येव तिलांस्तत्र विनिक्षिपेत् ।
तत्पात्रयोः शिष्टयोश्च पूर्ववत्तेन वांस्तरान् ॥

मन्त्रेण विन्यसेदेव तदूहेनैव वाक्यतः । भृंगराजसमुत्थानि पत्राण्यत्र विशेषतः ॥
दर्भपत्रैः पूरयेच्च स्वधा नम इतीस्म च । प्रतिपात्रजपः कार्यः पित्रे ते शुष्मित्यथ ॥

गृह्णामीति वदेत्पश्चाद्द्वयोरप्येवमुच्यते । तदुक्तेनैव विधिना दर्भैस्तं शोधनं भवेत् ॥
पितृपात्राणि संपन्नानित्येवं प्रवदेदपि । सुसंपन्नानीति पश्चात्तदुक्तोऽयं स्वयं पुनः ॥
स्वधाऽस्त्विति चोक्त्वाथ विचारं तदनन्तरम् । स्वस्त्यस्त्वित्युत्तरे जाते तदावाहनमाचरेत् ॥

वसन्तस्त्वेति मन्त्रेण आयन्तु न इति तथा ।
सावधाना भवन्तु स इत्युक्ते तदनन्तरम् ॥

समानमन्यन्निखिलं पूर्वपरकथितं तु वै । मण्डलानामर्चनं च तेनैतत्तु समाचरेत् ॥
पूर्ववन्मण्डलस्यापि करणं त्वत्र चोदितम् । पात्राणि मण्डलेष्वेषु प्रक्षिपेत्कानि तानि वै
यदि पात्रं पानसं चेत्पितृणाममृतं भवेत् । पालाशं पय इत्युक्तं यवौदुम्बरनिर्मितम् ॥

गुडेन तुलितं तस्मात् पौन्नागं दाधिकं भवेत् ।
रम्भाऽऽज्येन समाः प्रोक्ताः पनसस्तूत्तमोत्तमः ॥

शालाटुफलपत्रैश्च छायाकाष्ठमृदादिभिः । अत्यन्तपक्वभारास्ता निरन्तरसुसंततिः ॥
चतुर्भिः सकलैर्दिव्यैः गोधूमतिलसद्गुणैः । मधुमाषमहाद्रव्यैः पनसोऽयं विशिष्यते ॥
सर्वथा पनसद्रव्यदुर्लभे तु यदा भवेत् । यं कंचन पदार्थं वा पनसं भावयेत्तदा ॥
भावयित्वा वदेच्चापि पनसोऽयं प्रकल्पितः । मयाद्या लभमानेन पदार्थोऽयमिति स्म वै

तावता पितरस्सर्वे नित्यतृप्ताः स्युरेव ते ॥

## स्वधाकारः

अग्नौ करणशिष्टान्नमादायाथाज्यमेव च । हस्तोदकं स्थानविप्रादीनां तेषां यथाविधि
संप्रदाय तदाज्यं वै तेषु पात्रेषु तत्क्रमात् । अभिघार्यान्नमादाय स्वधेयमिति निक्षिपेत्
तत्पुनस्त्वभिघार्याथ दत्वा हस्तोदकं पुनः । मेक्षणं प्रहरेदग्नौ तूष्णीमेव समन्त्रतः ॥

यद्येको ब्राह्मणश्चेत्तु त्रयाणामपि केवलम् ।
तस्मिन्नेवाखिला धर्माः प्रयोज्या इति वै मनुः ॥
एवमेवापुनः पात्रे दैविके केवलाऽऽज्यतः ।
अभिघारणमेवस्यात् तथा सोदकमेव च ॥

## स्नुषापाकवर्णनम्

यथाग्नौ करणं प्रोक्तं स्वधेयमिति मन्त्रतः । तच्छिष्टदानं कथितं तत्पात्रे तेन कर्म
श्राद्धकर्मण्येतदेव प्रधानं स्यात्तथा पुनः । तच्छिष्टं पिण्डकार्याय प्रधानं स्यादतो
सन्नष्टं चेत्तदा श्राद्धं नष्टमेव भवेद्ध्रुवम् । पुनः श्राद्धं च विहितं परेऽह्नि विधिनै
अग्नौ करणलोपे वा स्वधेयमिति यत्पुनः । हविःशेषप्रधानं तत् तस्य लोपेऽपि श्रा
तच्छिष्टपिण्डसंयोगलोपे वा श्राद्धनामकम् । कर्मैतन्नाशमायाति तस्माद्वैतन् प्रयत्न
यथैव श्वाशुच संभूतिस्तथा कुर्यात्तु पैतृकम् । पत्नीहस्तसमानीत भक्तेनैव विचक्ष
अग्नौ करणकर्माख्यं कुर्यात्कर्म विधानतः ॥

### स्नुषापाकः

स्नुषाहस्तैकरचितः पाकोऽमृतसमो मतः । स्वेषा स्नुषा कर्तुं स्नुषा ह्यलिने पाककर्मणि
यद्येते दैवयोगेन तत्कार्ये शक्तिशून्यके । तत्पाकयोग्यकार्येषु स्यातां भक्ति सम
शक्ते ते यदि तत्कर्मकरणे जामितापरे । स्यातां तज्जन्म वैयर्थ्यं श्वगर्दभसमं भ
तस्मात्प्रीतः श्वशुरयोः श्राद्धे यत्नेन भक्तितः । यथाप्राणं पाककर्मनिरताः स्युः पति
श्वशुरश्राद्धकार्येषु पाकप्राधान्यकेषु वै । या श्रमं कुरुते भक्त्या साऽग्निष्टोमफलं लभ

या स्वस्यैव वृथा गर्वात् तत्पाकविमुखा भवेत् ।
भ्रूणहत्यामवाप्नोति प्रतिजन्मनि दुर्भगा ॥
वन्ध्या दरिद्राऽऽथवा क्रूररूपिणी च प्रजायते ।
पाकाशक्त्येऽपि वा तूष्णीं स्नात्वा या नियता शुचिः ॥

परिवेषणमात्रं वा कुर्यादित्येव सा श्रुतिः । स्नुषाहस्तैकपूतं तं पूतं पुत्रकरेण च ॥
मन्त्रप्रोक्षणपूतं च तदग्नौ करणेन च । अतिपूतमतिश्लाघ्यं स्वधेयमिति मन्त्र
निक्षेपणेन च पुनः पूतं तत्प्रोक्षणेन च । अभिघारणतोऽतीव पूतं गायत्रिया त
प्रदानकालतद्गायत्रिया पूतं पुनस्तथा । परिषेचनपूतं च यजमानस्य तत्पर
तदन्नसमृतं ज्ञेयं दशपूतं तदा तदा । मन्त्रितं कुशपूतं च यजमानस्य हस्ततः ॥
तदन्नं पितॄणां तृप्तिहेतवे वै प्रकल्पते । दशक्रियापूतमिदं श्राद्धं कर्म न चेतरत् ॥
एतद्दशक्रियालोपे तन्न श्राद्धं प्रचक्षते । स्वधेयमिति निक्षिप्ते त्वग्नौ करणशिष्ट

## परिवेषणक्रमः

परिवेषणमेव स्यान्न तदन्यत्र तत्परेण् । अन्नमादौ समः प्रोक्तं पायसं तदनन्तरम् ॥
भक्ष्याणि च फलान्येवं शर्करामधुमाश्रियम् ।
शाकानि सारपाक्यानि शाकानि तदनन्तरम् ॥
पश्चाल्लवणशाकानि पृथग्नैकजान्यपि । अपक्वरुचिनान्येवं रसायनमुखान्यपि ॥
नानाविधानि चित्राणि लवणं न न पत्र च । घृतं दधि जलं पश्चाच्चरमे सूर ईरितः ॥
परिवेषणतः पश्चात् सूपस्य न किमप्युत । गायत्रीप्रोक्षणात्पश्चात् भक्ष्याणां पावनात्परम्
दर्भानुपरि संस्थाप्य तस्य शुध्यर्थमेव वै ॥

## अन्नसूक्तपठनम्

अन्नसूक्ताख्यमन्त्राणां पठनं सांप्रतं शिवम् ।
करिष्य इति संकल्प्य नमो ब्रह्मण आदितः ॥
राक्षोघ्नादिमहामन्त्रान् पावनांश्चापि वैष्णवान् । प्रसरेदत्र विधिना ब्राह्मणैर्बहुभिः सह
अहमस्मीति सूक्तं तदन्नाख्यं पाठनाच्छिवम् ।
पितृप्रीतिकरं श्रीमद्राक्षोघ्नं तज्जपेच्छुचि ॥
सह वा इति तद्वाक्यं राक्षोघ्नं कथितं बुधैः ।
किं स्विदासीदथैव स्यादाम्नायं श्रीप्रदायकम् ॥
पठनीयं विशेषेण यजमानश्रिये परम् । साभाराधनकल्पेन पृथग्दानं निगद्यते ॥
'पृथक् च प्रोक्षणं कार्यं पृथक् च परिषेचनम् । यजमानः स्वयं कृत्वा तदन्नस्य ततः परम्
'प्रदानं कार्यमेव स्यात् सर्वं तेनैव मन्त्रतः । पृथिवी तेन विधिना भक्तमादौ स्वहस्ततः
तद्धस्तस्य स्पर्शयित्वा भक्ष्याणां तदनन्तरम् ।
फलानामपि शाकानां सर्वेषां च यथाक्रमम् ॥
घृतस्य परमान्नस्य जलपात्रस्य चैव हि । स्पर्शयित्वैव तत्पश्चाद्वेदान् संबुध्य तत्परम् ॥

## पितृनिमित्तस्य पक्वान्नस्य प्रशंसावर्णनम्

एतद्वो हव्यमित्युक्त्वा गयेयं भूरिति स्म च ।
साक्षाद्गदाधरा एते ब्राह्मणाश्चेति भावनाम् ॥

कृत्वा तुष्टेर्दास्यमानं दत्तं चाक्षयतुष्टये । यथाभागं स्वाहा हव्यं तत्सन्न म मेति

द्विर्वदन् साक्षतान् दर्भान् संगृह्य जलपूरितान् ।
जलप्राधान्यतो भूमावुदक्पार्श्वे विनिक्षिपेत् ॥

गयायां रुद्रपादादिदत्तमस्त्विति भक्तितः । भ्रुवन्तु च भवन्तोऽद्य गयायां दत्तमि
वाक्यद्वये च संजाते ये देवा इति वै मनुम् । प्रजपेत्तु विशेषेण आगच्छन्त्विति त
पितृस्थाने तथा सर्वं पूर्ववच्च समाचरेत् । विशेषोऽत्र पुनस्सोऽयं स्वधा विष्णो सतः
कव्यं रक्षेति सप्रोक्त्वा पितृसंबोधनं परम् । एतद्वः कव्यमित्येव देवताः पितरोऽ
इदमन्नं कव्यमेव ब्राह्मणो हवनीयके । दत्तं च दास्यमानं चातृप्तेस्तत्सर्वमित्य
गयेयंभूरिति सर्वं अन्नं ब्रह्माहमित्यथ । भोक्ता ब्रह्मेति वै ध्यात्वा रजतं पात्रमित्य
मदच्छायेयमित्येव भावनापूर्वकेण वै । पितृभ्यो नामगोत्रादियुक्तेभ्य इति पूर्व
उक्त्वाखिलं वाक्यजालमिदमन्नं ततः पुनः । साक्षादमृतरूपं सदातृप्तेरिति तत्प
अक्षय्यतृप्तये चेति शिष्टं सर्वं यथा पुरा । स्वधाकारमिति ज्ञेयं कश्चिदत्र विशेषक

भस्ममर्यादादिकान् चापि कुर्यादेव विधानतः ।
ये चेह पितरश्चेति मन्त्रं सम्यक् समुच्चरेत् ॥

सर्वेषामपि पात्राणां स्वयं भूयो विधानतः । कुर्वन् प्रोक्षणं कृत्वा परिषिच्य च तेन
भोक्त्राऽप्येवं कारयित्वा तदापोशनशंतरम् । अर्चनस्पात्रगं यत्तत् कुर्याद्विप्रकरस्थि
एतत्कर्मैव नितरां सुपुत्रत्वप्रकारकम् । तत्कर्तुः कृतिनोऽतीव पितृनिष्क्रियदायक
एतदर्थं पुरा सर्वे पितरस्त्वस्य जन्मनि । सर्वस्वदानकर्तारो ह्यभवन्नतिहर्षि

---

## आपोशनम्

ताद्दगापोशनजलप्रदानं साम्प्रतं स्मृतम् । तत्प्रदानानन्तरं वै अमृतोपेति मन्त्रतः॥
तत्प्राशनं प्रकथितं यद्दत्तं तेन पाथसः । यद्यन्यत्प्राशनं कुर्युः तद्दत्ताच्छंबरं तु ते॥
स्वयं तत्पितरः सोऽपि सर्वे स्वपितरः क्षणात् । कालसूत्रैकशरणाः प्रभवन्ति न संशयः
ततस्तु सर्वे भोक्तारः कदाचित्तादृशं खरम् । न कुर्युरेव सततं कर्म क्रूरं द्विजोत्तमाः॥

श्रद्धायामिति मन्त्राणां प्राणाहुतिकृतौ तदा ।
यजमानो जपं कुर्यात् प्रतिस्वाहाकृतौ द्विजाः ॥

तदाहुतिक्रमेणैव प्रकुर्युर्विधिना द्विजाः । भस्मनो यदि मर्यादा न कृता चेत्तदा वदा॥
दाग्रग्रहणमेतेषां वामहस्तेन चोदितम् । आमुक्त्यन्तं ततो वाच्यं यथासुखमिति स च

जुषध्वमिति तत्पश्चात् भावयिष्येति वैष्णवान् ।
पावनानपि रक्षोघ्नान् भुञ्जीयानिति च क्रमात् ॥
स्वाश्रावयेति चाप्युक्तस्तथा कुर्याद्यथामति ।
यथाशक्ति यथोत्साहं ब्राह्मणान् तत्र निक्षिपेत् ॥

## अभिश्रवणम्

अभिश्रवणकार्याय यावद्भुञ्जन्त्वये तथा । केचिदत्र पुनर्दत्ते जाते तत्परमेव वै ॥
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वधायै स्वाहायै नित्यमेव नमोनमः

इति मन्त्रं समुच्चार्य पुनरन्यान् पुराणगान् ।
मन्त्रान् पठेयुस्तद्भक्त्या ते सर्वत्र कृताकृताः ॥

अथाप्युदाहरिष्यामि तानेतानपि वै क्रमात् । सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे । ये स्म जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः
प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ । अमूर्तानां च मूर्तानां पितॄणां दीप्ततेजसाम्

नमस्यामि सदा तेषां ध्यायिनां योगचक्षुषाम् ।
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ॥

ऽते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु । ब्रह्मार्पणं ब्रह्म हविः ब्रह्माग्नौ ब्रह्मणा हुतम् ॥
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना ।
यज्ञेश्वरो हव्यसमस्तकव्यभोक्ताऽव्ययात्मा हरिरीश्वरोऽत्र ॥
तत्सन्निधानादपयान्तु सद्यो रक्षांस्यशेषाण्यसुराश्च सर्वे ।
त्वां योगिनश्चिन्तयन्ति त्वां यजन्ति च यज्वनः ।
हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक् ॥
कर्ता क्रियाणां ॥ स इज्यते क्रतुः स एव तत्कर्मफलं च तस्य ।
स्रुगादियत्साधनमप्यशेषं हरेर्नकिञ्चिद्व्यतिरिक्तमस्ति ॥
देशात्कालात्तथा मन्त्रवस्तोभ्यो हविषस्तथा ।
कर्तृभ्यश्चापि भोक्तृभ्यः द्रव्याद्वा न्यूनतस्तथा ॥
तिरिक्तादिदं कर्म ह्यच्छिद्रममविकलं तथा । साम च सगुणं भूयादित्येवं यूयमद्य वै ॥
इतेति नमस्कुर्यात् तेऽप्यनन्तरमेव वै । तथास्त्वित्येव च महत्प्रीत्यैव निखिला अपि ॥
वदेयुः सहर्षास्ते भोक्तारश्च समग्रितः । पुनश्च यजमानोऽथ युष्मद्वाक्यमहत्त्वतः ॥
सर्वैवैकल्यशून्येन श्राद्धेनानेन केवलम् । गयान्नश्राद्धतुल्येन अक्षय्यप्रीतितृप्तितः ॥
पुनरावृत्तिरहितब्रह्मलोकाप्तिरस्त्विति । भवन्तो वै ब्रुवन्त्वद्य तद्वाक्यसमनन्तरम् ॥
तथास्त्वित्येव सर्वे ते प्रवदेयुर्द्विजा अपि । तद्वाक्यश्रवणात्पश्चान्नमो देवेभ्य इत्यपि ॥
स्वधा पितृभ्य इत्येवं बृहते विष्णवे नमः । ओं तद्ब्रह्मेति नवकं यजुषा(षु)श्रुत्वमन्यथ
यजमानो वदेत्सर्वं श्रद्धायामिति पञ्चकम् ।
जपेत्तु प्राञ्जलिर्भूत्वा ब्रह्मणि मात्मेति ॥ जपेत् ॥
परिषेचनतः पश्चात् भूय एव तदेव हि । घृतापोशनपायसु तेषु भोक्तृषु सत्वरम् ॥
इमं पुराणवाक्यं च प्रवदेत्तच्च वच्म्यहम् ।
ईशानविष्णुकमलासनकार्तिकेय वह्नित्रयार्करजनीशगणेश्वराणाम् ।
क्रौञ्चामरेन्द्रकरशोद्भवकाश्यपानां पादान्नमामि सततं पितृमुक्तिहेतून् ॥
इत्युक्त्वाथ नमस्कृत्य चेयं भूमिर्गयेति वै । एते गदाधरा विप्रा वटच्छायेत्यमीत्यपि ॥

भावयेदेव मनसा पुनरेकं यथेशतः । वचनं तन्तुरागाणां मन्त्ररूपमनीश च ॥
गयायां धर्मपृष्ठेषु सदसि ब्रह्मणस्तथा । गयाशीर्षे वटे चैव पितृणां दत्तमक्ष

एवमुक्त्वा गयगयेत्येवं सम्यक् समुच्चरेत् ।
गयागयेति वा ब्रूयात् काशीकाशीति वाऽथवा ॥

यदं तं धायया विन्दुमाधवं संस्मरेदपि । एतत्सर्वं श्राद्धमात्रे कर्तव्यत्वेन के

जगदुः क्षत्रियादीनां न विप्राणामिति स्म वै ।
अतः कृताकृतं प्रोक्तं भोजने श्राद्धकर्मणि ॥

पृष्टे ब्रूयाच्छ्राद्धकर्ता गायत्रीं वेदमातरम् । अहमस्मीति सूक्तं च भोजनादौ
वेदाक्षरैकरहितश्राद्धकर्ता तु केवलम् । नामत्रयजपं कुर्वन् ईशानं तं हरिं स्मरन् ॥

आतृप्त्युपविशेत्तेषां तदनन्तरमच्युत ॥

## ब्राह्मणभोजनानन्तरकृत्यम्

मधुत्रयं जपित्वाथ ह्यक्षन्नमीमदन्त्यथ । मधुमध्विति संपन्नं कर्ता ब्रूयादतन्द्रितः
सुसंपन्नमिति प्रोक्ते एतच्छ्राद्धे विशेषतः । संपादितेषु पक्वेषु पदार्थेष्वपि वस्तु ॥

य इष्टः सोऽद्य प्रष्टव्यः इति संप्रार्थयेत् द्विजान् ।
सर्वं संपूर्णमित्येव प्रोक्ते भोक्तृभिरप्यथ ॥
तृप्ताः स्थेति द्विवारं वै संबुद्ध्यन्तेन तान् वदेत् ।
विश्वान् देवान् पितॄंश्चापि सति विष्णुं तमच्युत ॥

तृप्ताः स्म इति तैरुक्ते तन्मंत्रं समुदीरयेत् । असोमपाश्च ये देवा यज्ञभागविवर्जिता

## विकिरम्

तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम् । ततः परं पैतृकेऽपि स्थाने मन्त्रमिदं स्मरन्

तदुच्चरेच्च विधिना तत्कर्मणि तदा स्वयम् ।
असंस्कृत प्रमीता ये त्यागिन्यो याः कुलस्त्रियः ॥

दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम् ।
विष्णुस्थाने तथाप्येकं मन्त्रीं तत्समुदीरयेत् ॥

वैष्णवं परमं भव्यं श्राद्धकर्मणि संस्थिते । असंशयो भवेद्विष्णुर्मोक्षसाधनमव्यय
पितॄणां च वरं श्रेष्ठं विकिरान्नं च वैष्णवम् । एभिर्मन्त्रैर्विकिरान्नं दत्वा तत्पुरतो
उच्छिष्टपिण्डं दद्याच्च तन्मन्त्रेण यथाविधि । तिलान् दर्भान्समास्तीर्य भूतले पत्रसङ्कि

तन्मन्त्रं संप्रवक्ष्यामि कर्मणस्तस्य संप्रति ।
ये अग्निदग्धा येऽनग्निदग्धाः ये वा जाताः कुले मम ॥
भूमौ दत्तेन पिण्डेन तृप्ता यान्तु परां गतिम् ।
अग्निदग्धानग्निदग्धेभ्योऽस्मत्कुल ( प्रसूत ) मृतेभ्यः ॥
अयं पिण्डः स्वधा नम इत्येवं तत्र निक्षिपेत् ।
अग्निदग्धानग्निदग्धाः मार्जयन्तां तिलोदकम् ॥

एतद् इति तद्दत्वा तिलसंमिश्रितोदकम् । पादौ प्रक्षाल्य चाचम्य सपवित्रकरः पुन

उच्छिष्टभागभ्योऽन्नं दीयतामित्येव वदेच्च तान् ।
तद्वाक्यं तु तथा प्रोक्तं यजमानेन ते द्विजाः ॥
भोक्तारश्च तदा कुर्यु रेतेनैव (?) स्व मन्त्रतः ।
यजमानकुले जाता दासा दास्योऽन्न काङ्क्षिणः ॥
सर्वे ते तृप्तिमायान्तु मयादत्तेन भूतले ॥

## उत्तरापोशनम्

अमृतेतेति च मन्त्रेणोत्तरापोशनं परम् । यजमानः स्वयं दद्याद्विप्रहस्तेषु सादरम
तस्रीत्या तेऽपि मन्त्रेण तेनैवान्तं समाप्नुयुः । भद्रायामित्युत्तराणि यजूंषि स्वयमेव
यजमानो जपेदेव वागुप्टेनेति तज्जपेत् । यजमानोऽथ भूयश्च संकल्पं सम्यगाचरेत्

## पिण्डदानं

पिण्डदानं करिष्येति श्राद्धीयं स पितुरित्यपि ।
तिलोदक ( ... ... .. ) ।
इति संकल्प्य विधिना पिण्डदानं समाचरेत् ॥

पितृयज्ञविधानेन सर्वमेव यथा तथा । उच्छिष्टसंनिधावेव पिण्डदानं नचान्यतः॥
पिण्डपूजां विधानेन यथाशास्त्रं समाचरेत् । नैवेद्यमत्र भक्ष्याणि फलान्यपि विशे

ताम्बूलानि प्रकल्प्यानि पुष्पगन्धादिकानि च ।
चिरन्तिकायाः श्राद्धे तु सिन्दूरं कुंकुमादिकम् ॥

तथा सुगन्धद्रव्याणि देयान्येव विशेषतः । वस्त्राभरणजातानि पिण्डानां तु पृथक् पृ

देयानि शास्त्रविधिना पितरः पिण्डरूपिणा ।
कर्तव्याश्च नमस्काराः ये कामा अत्र केवलम् ॥
वक्तव्याः प्रार्थनीयाश्च वरदाः पितरस्तथा ।
स च श्लोकोऽत्र वक्तव्यः गयगीतः पुराणगः ॥

शमीपत्रप्रमाणेन पिण्डं दद्यात् गयाशिरे । उद्धरेत्सप्तगोत्राणि कुलमेकोत्तरं शतम् ॥
अस्य श्लोकस्य पठनात् श्राद्धमेतत्सुपावनम् । गयाश्राद्धसमं भूयादित्याह भगवान् गद

यजमानोऽपि तत्काले इमे पिण्डा मयार्पिताः ।
गयापिण्डसमा भव्याः भूयासुरिति वाक्यशः ॥
भुयन्त्वथ भवन्तश्चेति वाक्यान्तेऽपि वाक्यशः ।
गयापिण्डैकतुलिताः भवन्त्विति वितीर्य तम् ॥
वदेयुः कृपया सर्वे भोक्तारः परया मुदा ।
ततः कर्ता युष्मदनुज्ञया पिण्डानहं द्विजाः ॥

---

## पिण्डोद्वासनम्

उद्वासयिष्ये शास्त्रीयवर्त्मना मन्त्रपूर्वतः ।
अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका ॥
पुरी द्वारावती चैव सप्तैता मुक्तिदायिकाः ।
पिण्डोद्वासनमन्त्रोऽयं ये तत्रोक्तपरागतिः ॥
सदाः पितॄणां प्रभवेन् क्रमन्मुक्तेश्च दायकः ।
ततः स्वस्थिति कन्नोक्ते शोभनं हविरित्यथ ॥

देषुऽपि मोत्कारः पश्चात्पिण्डस्थलस्य वै । उत्तरत्र पुनश्चापि शुभस्थानासुसिद्धये

पूर्वेन प्रोक्षणं कुर्यात् तां भुवं दर्भतण्डुलैः ।
सम्यक् च पूरितां कृत्वा शान्तिरस्त्वादिकैः शतैः ॥

ानि सर्वाणि पुण्याहवाचने गदितानि हि । भोजनानन्तरं विप्रकरशुध्यर्थकारणात्
हेश्वरान्तरं कृष्णपायसा पात्रगेन वै । पद्वारं क्षालयेत्कर्ता तावता श्राद्धमुक्तिः
ग्रायत्यं तु यज्जातं तत्करस्य विनश्यति । करशुद्धौ च जातायां तत्करेण ततः पद्म्

भविष्यमाणकार्याणां योग्यता महती भवेन् ।
कर्ता संप्रार्थयेत्पश्चात् भोक्तॄः सर्वान् सुखस्थितान् ॥

वरे देवा हि पितरः परं युष्मदनुमहान् । अस्मद्गोत्रं सम्यगेव वर्धतामिति तान् वदे
। स्वस्ति वर्धतां गोत्रं इति ब्रूयुस्तोपकाः । देवतानां प्रसादोऽस्तु पितॄणामपि सन्तत

इत्यक्षतान् प्रदद्युस्ते स्वस्ति ब्रूतेति तान् वदेत् ।
श्राद्धे अन्नं मया दत्तं अक्षय्यं सद्भवत्विति ॥
ब्रूतेति प्रवदेत्कर्ता पितॄन् देवान् पृथक् पृथक् ।
सम्बुध्यन्तेन निर्दिश्य स्वधा स्वाहा विधानतः ॥
वाचयिष्येति कर्ताऽसौ वाच्यतामिति ते द्विजाः ।

अक्षय्योऽस्तु पितृभ्यः ओंकारश्च तथा पुनः ।
ओं स्वधेति ततो कर्ता स्वधा वाच्यमिति वाडवाः ॥
ततः स्वधा संपद्यन्ता इति कर्ताऽधरो वदेत् । संपद्यन्ता स्वधा चेति प्रत्युक्तिस्तस्य देवतः
देवाः प्रीयन्तां विश्वे ते प्रि(प्री)यन्तां त इति द्विजाः ।
एवं पितृणां स्यादेव चेति वाक्यद्वयेन च ॥
जलानि विप्रकरयोः तानुद्दिश्य पितामहैः । प्रदेयानि श्राद्धकर्त्रा सत्वरं सुमनस्तरम् ॥

## दक्षिणादानम्

हिरण्यं रजतं चापि दद्यात्तां दक्षिणां पराम् । पितृंस्तु दक्षिणा देया द्विगुणा श्राद्धकर्मणि
दक्षिणाः पान्तु वाक्येन पान्तु स्वां दक्षिणा इति ।
प्रत्युक्तिरिति विज्ञेया सद्ब्राह्मण्येति सूरिभिः ॥
वाजेवाजेति मन्त्रेण उत्तिष्ठत पितर इति । अनुगच्छन्तु मन्त्रेण तदुद्वासनमुच्यते ॥
दर्भैरुद्वासनं कुर्यात्प्रशान्तैतान् पितॄन् सुरान् ।
एवं पूर्वोक्तमन्त्राभ्यां अभीवाजस्य तां जपेत् ॥
अनन्तरं प्रार्थनाख्यां ऋचं शाट्यायनीरिताम् ।
प्राञ्जलिः प्रपठेत्प्रह्वः तत्पुरस्तात्स्थितः स्वयम् ॥
तं अभ्युदाहरिष्यामि सर्वेषां विशदाय वै । दातारो नोऽभिवर्धन्तां वेदाःसन्ततिरेव च
श्रद्धा च नो मा व्यगमात् बहुदेयं च नोऽस्त्विति ।
अन्नं च नो बहु भवेदतिथींश्च लभेमहि॥
याचितारश्च नः सन्तु मा च याचिष्म कंचन । ऊहेन चैतयोरुक्तिरेवं वाच्या विशेषतः
दातारो वोऽभिवर्धन्तां वेदाः सन्ततिरेव वः ।
श्रद्धा च वो मा व्यगमाद् बहु देयं च वोऽस्तु ॥
अन्नं च वो बहु भवेदतिथींश्च लभध्वम् ।
याचितारश्च वः सन्तु मा च याचध्वं कंचन ॥

अथ कर्ताऽन्नशेषः किं क्रियतामिति वै वदेत् ।
ते विप्रास्तस्य च प्रोचु र्वाक्यस्योत्तरमञ्जसा ॥
इष्टैः सहैव भुञ्जन्तां इति वाक्यात्ततः परम् । ब्राह्मणानां स्वयं कर्ता स्वादुपंसद इत्यृचः
दक्षिणाभिमुखस्तिष्ठन्नुपतिष्ठेत्तु वै पितॄन् ।
प्राचीनावीतिना भक्त्या तत्पश्चाद्ब्राह्मणांस्तु ते ॥
मन्त्राक्षतान् प्रदद्युश्च वेदमन्त्रैः शिवप्रदैः ।
तान् स्वीकृत्य स्वयं भक्त्या चाञ्जल्या भूय एव वै ॥
पुराणोक्तानि मन्त्राणि प्रवदन् भक्तिपूर्वतः । विप्रपादौ संस्पृशन् वै पीडयेच्च पुनः पुनः
तान् श्लोकानपि वक्ष्यामि पावनानघवारकान् ।
अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात् ॥
अद्य मे वंशजाः सर्वे याता वोऽनुमहादियम् । पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः
तत्क्लेशजातं चित्ते तु विस्मृत्य क्षन्तुमर्हथ । वसिष्ठवामदेवादितुल्तितास्तु समागताः ॥
सूर्योपरागसदृशं पितृश्राद्धमभून्मम । आसनैर्भोजनद्रव्यरूपकैर्दक्षिणादिभिः ॥
ममापराधिनाऽन्नेन किमप्यद्य न सत्कृतम् । अग्नौ करणरूपास्यं विप्रभोजनरूपकम् ॥
पिण्डप्रदानरूपं यत् कर्मत्रयमिदं तु तत् । यथोक्तं च यथाशास्त्रं गयाश्राद्धफलप्रदम्
अस्त्वित्यद्य भवन्तो वै ब्रुवन्त्वित्येव तान् वदेत् ।
तथैव ते प्रब्रूयुश्च तदनन्तरमेव वै ॥
विप्राक्षतैर्गृहपतिः श्रीकृष्णार्पणमस्त्विति । तदर्पणं जलैः कुर्यात्ततो नामत्रयं जपेत् ॥
गन्धपुष्पादिभिः पूजामलंकारादिभिः परम् ।
कृत्वाथ भोक्तॄणां तेषां ताम्बूलादिप्रदापनैः ॥
नितरां हर्षितां कृत्वा वेदमसीमान्तमाव्रजेत् । अनुव्रजेयमित्युक्त्वानुव्रजेति पुनश्च तैः
अनुज्ञातोऽनुव्रजेत्तु कथान इति तज्जपेत् । सर्वसाद्गुण्यसिद्ध्यर्थं कर्मलोपनिवृत्तये ॥
स्वपितृणामूर्ध्वलोकप्राप्तिसिद्धये तथाऽनुजपेत् । रुद्रसंख्यानमः शब्दकावध्यं वेदराशिनम् ॥
वामदेवायेति मन्त्रं प्रजपेद्भक्तिसंयुतः । पश्चात्तु तानुनुव्रज्य कृत्वा चापि प्रदक्षिणम् ॥

नमस्कृत्य च साष्टाङ्गं कृतार्थोऽस्मीति भावयेत्।
पादौ प्रक्षाल्य चाचम्य विप्रपूजां समाचरेत्॥

ताम्बूलदक्षिणाभिश्च सर्वानेव प्रहर्षयेत्। यथाशक्त्या ब्राह्मणांश्च भोजयेदपि भक्तितः

## पितृशेषभोजनम्

पुत्रान् पौत्रांश्च बन्धूंश्च मित्राण्याप्तान् परानपि।
शिष्टानिष्टानाप्तलोकान् भृत्यवर्गानशेषतः॥
तत्प्रीतये स्वयं चापि तच्छेषं प्राशयेच्छुचिः।
मातृदारान् ज्ञातिदारान् भिक्षुता(का)नपि केवलान्॥

मृष्टान्नैरेव नितरां समृद्धैः शक्तिसंभवे। स्वमुकस्यभावे तेषां वै पितॄणां तृप्तिरुत्तमा॥
न भवेदेव तस्मात्तु सम्यक् सर्वैश्च वस्तुभिः। तद्भुक्तशेषैर्न परैः कुर्यात्तुष्टिं स्वबालकैः

तत्प्रार्थितप्रदानैकपूर्वकं सुमुखः सुहृत्।
न तस्मिन दिवसे कुर्याद्विमुखान् बालकान् स्वकान्॥

उच्चैःस्वरेण नाक्रोशेत्ताडयेन्न तु भीषयेत्। बालायमानतोऽत्यीव पितरस्तेऽति दुःखिताः
भवेयुर्भग्नमनसस्तदुपर्येव तन्मनः। कालान्तरे स्वक्रियायाः एते कर्तार इत्यपि॥

तदुपर्यंति तत्प्रीतिर्महती सर्वदा स्थिरा।
तिष्ठत्येव हि तस्मात्तु तद्दिनेऽस्मिन् विशेषतः॥

स्वमुख्यरोचवस्तूनि तदनिप्रार्थितानि वै। प्रदद्यादेव सर्वाणि यानि तान्यधिकारावा॥
तत्प्रदानैकमार्गेण तत्क्षणेन प्रयच्छ च। यथाश्राद्धदानं तेन कृतमेव भविष्यति॥

पाककालेऽपि बालानां रोदनस्योत्तरक्षणे।
पाकक्रियां तां निक्षिप्य मातरस्तान् प्रगृह्य च॥

स्नानक्रियापूर्वशुद्धान् शुद्धवस्त्रनिवेशितान्। स्तन्येन पाययेदेव तावन्मात्रेण तेऽखिलाः
क्षुत्तृष्णारहिता भूत्वा परमानन्दनिर्भराः। पूर्णकामा नित्यतृप्तास्त्वेचित्तास्तत्पराश्च
प्रभवन्त्येव नितरां नष्टदुःखं तथाविधम्। दृष्ट्वा स्तनंधयं सर्वे तदुपर्यंतितर्पिताः
कालम् निर्दिशत्येव तथाविधाः। स्तन्यपानक्रियामुद्रा बाऽप्रदगर्भस्य

द्वैगुण्यं नैव किंचित्पितरोऽस्य तन्दुसुराः । अङ्गीकुर्वन्ति तस्मात्तु तदा स्तन्यं विधानतः
पाककाले प्रदद्यात् पाकान् बालस्तथाविधान् । पाययेदेव तत्प्रीत्यै तेन वैगुण्यनामकः ॥
प्रत्यवायो नैव भवेदिति व्यासोऽब्रवीत्पुरा । श्राद्धान्ते किल बालानां तदपेक्षितवस्तुनाम्
दानमात्रतो नूनं गयाश्राद्धफलं लभेत् । स्वपत्नी वा स्वयं वापि भ्रातरो मातरोऽपि वा

तच्छिष्टभक्ष्यसर्वांघभक्षणाभावतस्तदा ।
मान्या यदि स्थितास्चेत्तु स्वस्यास्सन्त्वस्तदाश्यते ॥
पितरो नैव तृप्यन्ते प्राप्तकामाश्च नैव ते ।
तस्मात्सर्वे तद्दिनेऽस्मिन् सम्यग्भुक्ति सुतृप्तिकाम् ॥
कुर्वीरन् पितृतृप्त्यर्थं न चेत्ते स्युर्हि दुःखिताः ।
तस्मिन् दिने तु वत्सानां पानार्थारिकमेव वै ॥
क्षीरं तूष्णीं पितृतृप्त्यै पाययेद्विधिवक्षणाः ।
तेन मात्रेण ते प्रीतास्ता प्रीतिं वापिंदी पराम् ॥

तुष्टिं च पुष्टिं च प्राप्नुवन्त्येव सादराम् । तत्कर्म कथितं सद्भिः मंत्रमेनत्सुपावनम् ॥
स्तपात्राणि सर्वाणि दत्तनित्यैव विनिक्षिपेत् । परेद्युः पुनरुद्धृत्य दूरतस्तु विसर्जयेत्
गोचरं यदि भवेत् तत्पात्रं तद्दिने परम् । व्यर्थमेव भवेच्छ्राद्धं तस्माद्गोप्यं परं हि तत्

## परेऽह्नितर्पणम्

ऽह्नि पुनः कर्ता श्राद्धाङ्गतिलतर्पणम् । तद्विपालेनैव कुर्यादन्यथा व्यर्थमेति तत् ॥
तिलोदकं पूर्वं परपात्यान्महात्ये । आश्रितेन परं पूर्वं परेऽह्नि तिलोदकम् ॥
यावन्त दत्ता प्रातस्तानेव तर्पयेत् । श्राद्धपात्रदेवानां तर्पणं स्यात्परेऽह्नि ॥
न्वसि प्रातस्तर्पणं यत्तूर्णं नरैः । अमृतं तन्नन्वेव द्वितीये प्रहरे पयः ॥
अलमेव रसाच्चतुर्थे रुधिरं भवेत् । परेद्युस्त्वपि प्रातः सर्वैरैतिलदर्भकैः ॥
मयविशेषेण तर्पणं तद्विधीयते । यः परेऽह्नि मृतात्मा विमूढो तर्पणं चरन् ॥
ति विमूढात्मा पितृभिः सह मज्जति । रौरवे कालसूत्रे च यावदाभूतसंप्लवम् ॥

श्राद्धकर्ता न ताम्बूलं तावदेव न खादयेत् ।
खादयेद्यदि मूढात्मा श्राद्धहन्ता भवेत् क्षणात् ॥

मोहादज्ञतया यः श्राद्धं ताम्बूलं यदि खादयेत । श्राद्धहन्ता भवेत्कर्ता रौरवं नरकं व्रजे

समाप्त्यनन्तरं तस्य ताम्बूलं न तु दुष्यति ।
श्राद्धं तत्तर्पणान्तं स्यात् तन्निर्वृत्तो तु तच्चरेत् ॥

दर्शादिकेषु श्राद्धेषु कृतेषु तदनन्तरम् । ताम्बूलचर्वणं शस्तं वृत्तत्वात्कर्मणः परम् ।
द्वितीयपारणुक्तिस्तु तद्दिनेषु निषिध्यते । अभ्यञ्जनरतिश्चैव पत्तनो गमनं तथा ।

श्राद्धं कृत्वा तु यो मौढ्यात् भुङ्क्ते परान्नमतिमूढधीः ।
पितरस्तस्य ते क्रुद्धाः शापं दास्यन्ति दुस्तरम् ॥

अन्नश्राद्धं तु मुख्यं स्यादितरन्निखिलं परम् । अमुख्यमेव सर्वत्र ह्यतोऽन्नेनैव तच्चरेत्
पात्रेष्वेव प्रदातव्यं मुख्येषु सततं सुधीः । वेदार्थज्ञानचर्याभिः सर्वश्रोत्रियसन्ततौ ॥

तत्पात्रं लभ्यते श्रीमत् नान्यत्र तु कथंचन ।
आदौ चर्याऽत्र कथिता सन्ध्यामन्त्रौककारिता ॥
सन्ध्यामात्रौकशून्ये तु ब्राह्मण्यं तत्र वै भवेत् ।
कुतः कथं केन कस्मात् इत्युवाच श्रुतिः परा ॥

तद्ब्राह्मणस्समीचीनः सर्वकर्मसु सन्ततम् । अत्यन्तावश्यको श्रेयस्तदभावेन किञ्चन॥
ब्राह्मणा जंगमं तीर्थं ब्राह्मणा जंगमं तपः । ब्राह्मणा जंगमा देवाः ब्राह्मणे विद्यतेऽखिलम्
तस्मात्तु ब्राह्मणाः पूज्याः सर्वेषामपि सन्ततम् । देवताचार्यगुरवः शिक्षकाश्च पुरोहिताः

याजकाः सर्वलोकानां कारका भव्यसंपदाम् ।
तस्मात्सर्वात्मना ते वै नाधिक्षेपस्य देहिनाम् ॥
ते पात्रभूता विज्ञेयाः पुनर्वन्द्या यथासुराः ।
अब्राह्मणेभ्यस्त्वधिकाः विज्ञेया ब्राह्मण भुवाः ॥
तेभ्योऽधिका ब्राह्मणाः स्युस्तेभ्यश्च श्रोत्रियाः पराः ।
तेभ्योऽधिका वेदविदस्तेभ्यश्च ब्रह्मवादिनः ॥

न ब्रह्मवादितुलितः कोऽप्यस्ति जगतीतले । महात्मसु ब्राह्मणेषु विद्यमानेषु तत्पुरः ॥
नागच्छेत् कोऽपि यानेन चतुरन्तेन वा तथा ।
रथेन वा शिबिकया शकटेनापि वाजिना ॥
गजादिना वा किं भूयो नातुरस्य विधिर्मतः ।
यद्यागतश्चेन् किं तस्य श्रेयः स्वश्रेयसं महत् ॥
ह्रीः श्रीः कीर्तिश्च पुष्टिश्च क्षयं यान्त्यखिला अपि ।
यदि गर्वसमायुक्तो जपत्सु सुमहात्मसु । विद्यमानेषु शुद्धेषु तन्मध्यमशुचिर्जडः ॥
समन्ततः सद्य एव दण्ड्यः सर्वैश्च वाग्भिरुः ।
धीरदृश्यैर्गच्छमातिष्ठ दुरात्मन्निति वाक्शरैः ॥
भाषणैः परुषैः क्रूरैः पश्यं द्विजनामकः । शूद्रश्चेत्पांसुनीराभ्यां प्रदूष्यः सहसा भवेत् ॥

## शुद्धानां ब्राह्मणानां मध्ये शूद्रागमने तस्य दण्डः

स्नानं कृत्वोपविष्टानां ब्राह्मणानां सरित्तटे । यदि मध्यंगतः शूद्रो निर्भयेन कदाचन ॥
एवं कुर्वन् वस्त्रधरः सोष्णीषो गच्छ दूरतः । इत्युक्तेऽपि पुनारावं कुर्वन्निर्भयमास्थितः ॥
हं शब्देनैन हुंकुर्वन् गच्छेद्यदि स पात्ययम् ।
ताडनीयो विशेषेण दाप्यश्च त्रिपणान्पुनः ॥
यदि स्वरोन्निर्भयेन पुनर्गच्छन् जलेन तान् । दूषयन्नपि सिञ्चन् वै शपन् धावन्निरन्तरम्
तदा तदा निर्दयेन नास्त्येवमिति वैरवि ।
योध्यमानोऽपि तस्यवत्त्वा तृणीकृत्य च सज्जनान् ॥
अघन्नानादिकालेषु समागच्छन् पुनः पुनः । हुंकारवादिदुष्कृत्यैः संस्पृशन्नपि निर्घृणः ॥
स्वपक्षपूजनार्थं च पीडयन् क्रूरभाषणैः ।
मया स्नेनं कृते तूष्णीं युष्माकं किमिति ब्रुवन् ॥
तन्मध्ये प्रस्पन् गाढं ब्राह्मणान्योऽवमन्यते ।
स सद्यः सर्वं यत्नेन राजन्याद्यैश्च वारितैः ॥

ताडनीयः दयारहितम चतुर्विंशतिकाम पश्चात् । प्रहस्तस्य विशेषेण दुर्मेनादंडना ॥
विप्रगोपो विशेषेण मद्भिः सर्वस्य केवलम् । विप्रमार्गेण शूद्रस्तु ब्राह्मणान् दूरतो

स राजा निर्दयं यातं यस्य आनीय सत्वरम् ।
पञ्चेन्द्रिकाग्रहणार्थैः शिक्षयित्वा विशेषतः ॥

अघोरतरमानान् तात्पयान्मासमर्थ पुनः । निगलै योजनीयश्च धर्मज्ञेन महात्मना ॥

विप्रमार्गेण शूद्रस्तद्विमं व्यवकृत्य माहमान् ।
ताडयेद्यदि मं राजा सद्यः भूत्वा शुचिव्रतः ॥

माहयित्वा ताडयित्वा सर्वयत्नेन भीतितः । पलायनपरं चापि कशाघातैरनेकशः ॥
कारयित्वा महापीडां महानिगल(ड)बन्धनैः । ग्रामपट्टे पातयित्वा तद्गर्तमखिलं यथा
संभरयेत्तथा कृत्वा सर्वस्वहरणाग्निना । प्राणेन प्रेरयेदेनं न चेद्राष्ट्रं विनश्यति ॥
यदि शूद्रास्तु बहवो धनिनो गर्वनिर्भराः । अन्तर्द्वेषा ब्राह्मणेषु विप्रभक्त्यानुमोदिनः ॥
बहिर्वेषेण नितरां ब्राह्मण्या इव केवलम् । आसमानाश्चोरकृत्याः परयनामनुमोदनम्
अन्तरं समुपाश्रित्य कल्याणेषूत्सवेषु वा । निमित्तान्तरमाश्रित्य प्रहारैरतिदारुणैः ॥
ताडिताः प्रहृताश्चेत्तु वेदवादेषु निर्दयम् । रक्तप्रवाहपर्यन्तं करपादादिघट्टनैः ॥

शिरस्फोटनमूर्द्धादिपर्यन्तैः कारिताः खरैः ।
तान् सर्वान् धार्मिको राजा विप्रताडनदिग्जयान् ॥

श्रुत्वैव सत्वरं सम्यक् ग्राहयित्वा कुचेतसः । यथा तैः प्रहृता विप्रास्तस्माद्दशगुणाधिकम्
कृपानद्भिः कशाघातै स्ताडयित्वाविनिर्दयम् । निगलैर्बन्धयित्वा च षण्मासं वर्षमेव वा ॥
सर्वस्वहरणं कृत्वा सर्वोपायेन निर्दयम् । दयामकृत्वा सुतरां तदुपर्यतिपीडयम् ॥
समाश्रित्यैव धर्मार्थं विरूपकरणादिभिः । उपवासक्लेशान् कृत्वा जलमूत्रनिरोधनैः ॥

अत्यन्तं दुःखितान् कृत्वा पश्चाद्राष्ट्राद्विवासयेत् ।
भवनान्यपि सर्वाणि कुड्याङ्कणमुखान्यपि ।

निर्मूलयित्वा नितरां तत्स्थले तत्परं पुनः । हैरण्डान्यतिशीघ्रेण बीजान्यपि निरन्तरम्
तदङ्कुरप्ररोहार्थं पातयेत्तत्सुरः स्थितः । एवं विप्रप्रहारस्य फलं त्विति निदर्शयन् ॥

द्धि कारयित्वैव तन्मुखादतिगह्वरम्। यथा वनं भवेद्घोरं तदा कुर्याद्दुरात्मनाम्।
मभूमिसंस्थानं न चेद्राज्ञो महद्भयम्। भवत्येव पुनस्तस्मिन् राज्ये दुर्भिक्षमप्यति
वृष्टिः सुमहती कलहः सुमहान् भवेत्। शिवदीक्षापराः शूद्राः कलौ प्रायेण सन्ततम्
पः शूद्रदीक्षा वर्धन्ते तत्र तत्र वै। तेषां तु बकवृत्तीनां ब्रह्मण्यो राष्ट्रवर्धनः॥

दीक्षां तदा तदा कुर्यात् न चेद्राष्ट्रं विनश्यति।
राज्ञो ह्ययं सदा धर्मः प्रजानां परिपालनम्॥

हि प्रकथितं दुष्टनिग्रहपूर्वकम्। शिष्टानां पालनं सद्भिः धर्मशीलैर्द्विजादिभिः॥
सर्वेऽपि कथिताः ब्राह्मणा एव मुख्यतः। शिष्टशब्दो ब्राह्मणेषु मुख्यत्वेनैव नान्यतः
न सदा दानपात्रता सा प्रकीर्तिता। तस्मात्ते सर्वदानानां मुख्यपात्राणि सन्ततम्
पि वर्णानां एवं सत्यश्च कश्चन। विशेषो ह्यत्र विज्ञेयः कन्यादानस्य बेत्तृभिः॥
तिसमुत्पन्नः प्रवरः शास्त्रवाक्यतः। तत्तज्जातिषु भूयश्च तदवान्तरजातिजः॥
प्रशस्ता वै तत्रापि च पुनर्महत्। बन्धुत्वमेव शस्तं हि श्रुतवत्त्वं च शीलता॥

## ब्राह्मणस्यैव भूदानम् तत्रापि सपिण्डादेः

भूदानेऽप्येषमेव स्याद्ब्राह्मणानां विशेषतः।
ज्ञातित्वं वा सगोत्रत्वं मादौ स्यादुत्तमोत्तमम्॥
तस्मात् ज्ञातौ सगोत्रे वा विद्यमाने विहाय तम्।
भूमिं न दद्यादन्यस्मै दत्ता साऽपि न सिध्यति॥

त्र यो मोहाद्विमानेषु भूरिषु। सगोत्रेष्वत्र ज्ञातिषु च श्रोत्रियेषु महात्मसु॥

आहिताग्निषु विद्वत्सु मूढधीः सोमयाजिषु।
अग्निचित्स्वतिरात्राप्तोर्यामयाजिषु सत्स्वपि॥

त्रिषु पुण्येषु वाजपेयादियाजिषु। कथं कुर्याद्भूमिदानं सर्वशास्त्रैकनिन्दितम्॥

सगोत्री पुरतस्तिष्ठन् दानकाले समाहितः।
न कुर्यात्तं निरोधं सः न निरुद्धः क्रियाश्चरेत्॥

अपि तूष्णीं स्थितो ज्ञातिर्दानकाले विचक्षणः ।
दानं पश्यन् क्रियमाणं ममैतं न मतं परम् ॥
इति वा तृप्तिमात्रेण न दानं तस्य सिध्यति ।
भूदाने हि ज्ञातिमतिः सामन्तस्य मतिस्तथा ॥
ग्रामस्थानां मतिश्चापि सगोत्राणां मतिस्ततः ।
दायादानां मतिश्चापि समीपग्रामिणां मतिः ॥

हिरण्योदकधारा च सर्वेषां पुरतस्तु चेत् । तद्दानं सिध्य ( ? ) न चेतेनैव सिध्यति ॥ तस्कराचरितं तत्र लिखितं च तदा तदा । प्रधानज्ञात्यलिखितं लिखितं दूरगोत्रिभिः ॥ चोरमार्गैकलिखितं लेख्यं दूषितमेव तत् । भूमिदानस्य पात्राणि पुत्राः पौत्राः पितामहाः पितरो भ्रातरः स्त्रीणां श्वशुरास्तत्सुताः परे । भवन्ति दानपात्राणि विद्यमानेषु तेषु चेत् अन्तरङ्गेषु सर्वेषु नान्यगोत्राय तच्चरेत् । अत्यन्तदुर्गुणी दुष्टो दीर्घवैरोऽपि केवलम् ॥

सगोत्रश्चेत् प्रार्थयित्वा तस्मै दद्याद्धरां कृती ।
आहिताग्निषु तिष्ठत्सु तानतिक्रम्य मौढ्यतः ॥

दद्याद्नाहिताग्निभ्यो न कदाचन मानवः । सगोत्रगैव सततं सदा भूमिः सरिद्यथा ॥ समुद्रगा तथेयं च तस्माद्दद्यात्सगोत्रिणे । तिष्ठत्सु ज्ञातिवर्गेषु स्यक्त्वैनानन्यगा परम् ॥

करोत्ययं द्विजान्हित्वा स्वदत्त आद्धृतया ।
अनाहिताग्न्याहिताग्न्योर्विवादे समुपस्थिते ॥

आहिताग्नेर्वदेत्पक्षमत्यन्तमपराधिनः । अपि तस्मिन् वदेन्नैव मन्तुं कमपि सर्वथा ॥ स एव धर्मः कथितः सतः श्रैष्ठ्यं प्रकल्पयेत । एवमेव तथान्यच विज्ञेयं पुरुषर्षभैः ॥

ब्राह्मणस्याब्राह्मणस्य विवादे समुपस्थिते ।
ब्राह्मणस्यैव धर्मेण जयो वात्स्यो(च्यो) नराधिपैः ॥

अयोग्यायोग्ययोरेवं श्रोत्रियेऽश्रोत्रिये तथा । असत्सतोश्च सर्वत्र विज्ञेयं धर्मवादिभिः ॥ सर्वत्र भूमिं सततं ज्ञातीनामेव धारयेत् । ते विशेषेण चेत्सन्तः श्रोत्रिया आहिताग्नयः किमुतेनि महात्मभिः । विज्ञेयः सर्वदा तस्मिन् दाने महति भौमिके ॥

जीवनांशप्राप्तभूमिं प्रविभागसमागताम् ।
क्रमागतां वा सामान्यविद्यमानां विना मतिम् ॥
[redacted] दानमाचरेद्भूमिं निखिलानां सगोत्रिणाम् ।
कस्मैचिद्याचमानाय भिन्नगोत्राय छन्दतः ॥
तिसंयोगविकलविधवानां तु सन्ततम् । न वृत्तिष्वधिकारोऽस्ति [redacted] महेषु धरासु वा ॥
ाते तु पतिसंयोगे तद्भूर्ध्वं वर्षपञ्चकात् । अप्रजा विधवा सा चेत्तस्यै दद्युस्तदीयकैः ॥
अन्नं वस्त्रं च यदि सा सुवृत्ता जनसम्मता ।
न तादृशो भवेत्सा च तस्यै नित्यं च तण्डुलान् ॥
ासनं त्रिपणक्रीतं मध्याह्ने सेव्यनं स्मृतम् । तादृश्या दैवयोगेन जीवनांशो धरात्मकः ॥
रदि लब्धस्तु परं न देयकायकवचन । विधवामात्रसंप्राप्त भूमियां साथ तज्जनान् ॥
यथाकथञ्चिदाप्नोति नान्या स्नानादिना कचित् ।
बहुज्ञातिषु तिष्ठत्सु ग्रामदेशेषु महात्मसु ।
विभक्तेष्वविभक्तेषु सुप्रसिद्धेषु भूतले । सर्वाचार्येषु निवरां तेषु यः प्रवरः परः ॥
तदाज्ञयैव सर्वेऽपि वर्तेरन्निति भूतले ।
मर्यादा कथिता सद्भिः गोत्रिणामप्यगोत्रिणाम् ॥
बन्धूनामपि सर्वेषां मर्यादा सा [redacted] केवला ।
परैः प्रकल्पिता नूनं नातिक्रम्याऽखिलैस्तु सा ।
यस्मिन् देशेऽपि वा ग्रामे प्रसिद्धः सर्वदिक्ष्वपि ॥
विद्यमानो विद्यया वा श्रिया वा तस्य संमतिः ॥
ियता चेत्तत्तु सम्यग्वै शक्यते नात्र संशयः । देशप्रसिद्धविदुषो यत्कार्ये संमतिः परा ॥
तत्कार्यं क्षमते कर्तुं सदानं च धरादिकम् । यदि तस्यासंमतिः स्यात्तद्देशग्रामयोः परम् ।
विद्यमानस्य तत्कार्यं न सिध्यत्येव सर्वथा ।
तत्प्राभव्यैकसिद्ध्यर्थं तुच्छैस्तद्ग्रामवासिभिः ॥
यत्कृतं तन्निरर्थकं मृषैवेति सुनिश्चयः । तद्धस्तलेखनं यस्य कार्यस्यात्र प्रदृश्यते ॥

प्रामाणिकं भवेन्न स्यात् विना तल्लेखनं वरम् ।
मुख्यानां लेखनं येषु सप्रख्यानां दुरात्मनाम् ॥

बहूनामपि किं तेन तत्र प्रामाण्यमात्मकम् । यत्र यत्र महात्मानो ये विज्ञानादिसद्गुणैः
प्रसिद्धाः शिष्टपूज्यैश्च यत्र तत्र परास्तु ते । तल्लेखनं विना सर्वं मुख्यानां लेखनं वृथा ॥
प्रसिद्धानां लेखनं चेद्यदि तत्सतः पुनः । (लि)लिखितस्त्वप्रसिद्धानां कार्यार्थं प्रभविष्यति
यत्प्रमाणलिपिर्यस्मिन् पक्षे पूर्वं प्रवर्तते । प्रसिद्धानां लेखनं च तत्सत्त्वं पचनुच्यते ॥

लिख्यभावे प्रामकर्तुस्तन्मयानां महात्मनाम् ।
प्रसिद्धानां तु विदुषां तत्पुण्डलिपिमात्रतः ॥

सत्यमप्यनृतं नूनं कार्यं तेन भविष्यति । पञ्चाशल्लिपिकर्तारः राजदण्ड्या भवन्ति हि ॥

अत्यन्तानुभवो नूनं न तु प्रामाण्यमृच्छति ।
आगमेन विशुद्धेन भोगो याति प्रमाणताम् ॥
कलापभोगश्शास्तो न भोगो मायासमुद्भवः ।
व्यामोहभोगो दाक्षिण्यभोगः पीडासमुद्भवः ॥
पीडाभोगो भृतेर्भोगो दयाभोगस्तथा परः ।
उपाधिभोगश्चरमो न भोगा इति कीर्तिताः ॥
अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चोरवद्राजदण्डेन दण्ड्यो भवति किल्बिषी ॥
स्वामिद्रोहं जनद्रोहं विना वैरं शुभं तथा ।
सञ्चारं कलहं चापि विनैव प्रबलाश्रयम् ॥
स्याच्चेदनुभवः सोऽयं सम्यक् प्रामाणिको भवेत् ।
( ... ... ... ... ... ... ) वच ॥

सन्निक्षोभं गुरुक्षोभं तत्तद्ग्रन्थनिरीक्षणम् । दुष्टाश्रयणमत्यन्तं तस्करानुभवास्स तु ॥
विनैव न भवेन्नूनं तादृशानुभवः स तु । प्रभवेत् बाधकायैव न कीर्त्यै श्रेयसे श्रियै ॥
सुखाय चात्मनो ( ... ... .. ) । ( ) व कथिता सद्भिः स्वामिलब्धप्रतिग्रहाः

ग्रामिणो ग्रामकर्तारो धर्मतो ग्रामभागिनः । अत्र स्वामी ग्रामकर्ता य आदावकरोत्परम्
ग्रामं द्विजानां दानेन तत्सकाशप्रतिग्रहाः । ग्रामभाग ( . . . ... ) ताः ॥
प्रतिग्रहिकराह्लब्धप्रतिग्रहपरश्च यः । तद्भागी सोऽपि भवति न तैः साम्यं स विन्दति ॥
तादृशास्त्वस्य मध्यासक्षेत्रकस्य विशेषतः । पूर्वाः सर्वे पूजनीयाः ये स्युः कर्तृप्रतिग्रहाः ॥
ग्रामाधिकारिण ( ....... . ) समोत्तमाः । रन्ध्रक्रियाक्रयस्तैरप्रविष्टा ये दुराशयाः
दुर्भोगो दुश्चरित्राश्च नित्यदुष्टाश्रयाखिलाः । अकार्यकारिणोऽन्यैक कार्यप्राधान्यचेतसः

अन्यथा कारिणश्चापि राज्ञः स्युर्दण्डभागिनः ।
तत्रापि सद्यो यत्नेन विश्वासाश्चेत्क्रियामुखात् ॥

रन्ध्रप्रविष्टाः सन्ताक्ष्याः संशयो नात्र कश्चिम यः । कालं प्रतीक्ष्य यत्नेन ग्रामभागैकचेतसा
ग्रामापदि ग्रामिभिस्तैर्दत्तभागात्तु संकटे । रन्ध्रप्रविष्ट इत्युक्तः ( ... .... ......... ) तः ॥
क्रियाप्रविष्टः सर्वेषां संमत्या ग्रामकार्यकृत् । दत्तभागस्तद्ग्रामे क्रियाविष्टः स उच्यते ॥
यद्विरोधे दण्डनीयस्तदभावे परं स्वयम् । स्थाप्य एव सदा राज्ञा क्रियाविष्टस्तु सर्वतः ॥

( ......... ) तिर्यः क्रियाविष्टः स उच्यते ।
सोऽपि क्रियाविष्टतुल्यः तत्र भाग्येव सन्ततम् ॥

यद्ग्रामकार्यादिषु चेदयं नालं हि धर्मतः । गृहीतभोग्यवृत्यादिसमाक्रान्तदिगन्तरः ॥

स्वैरम ( . .. . ) त एते सीम्नि चेत्स्वके ।
यदि स्थिताः साधवः स्युर्ज्ञात्वा धर्मं स्वकं सतः ॥
कृपया पालनीयाः स्युरुद्धास्यास्तेन चेत्खलाः ।
ये रन्ध्रादिप्रविष्टाः स्युस्तेषां प्रायेण सन्ततम् ॥
दुष्कृत्यं सहजं नात्र ( ... ...... ) थापि यत्नकः ॥

---

### ब्राह्मणवृत्तिकहारकदण्डः

ज्ञात्वा स्वधर्मे संतिष्ठेत्स तु देवोऽन्यथा न सः ।
समीचीनब्राह्मणस्य स्थितां वृत्तिं धराकृतिम् ॥
दानव्याजापहर्तारो दण्ड्या राज्ञा विशेषतः । असमीचीनदानाख्य ( ) परस्व
ज्ञात्वा राजा सद्य एव शिक्षयेन्न तु मोचयेत् । दाक्षिण्यं समुपाश्रित्य तदाश्रयविशेष
उपेक्षिता यदि खलाः राज्ञः पापं महद्भवेत् ।
अन्यभो ( .... ) ष्ट्रेषु भुञ्जते॥
तान्यनावृष्टिमिच्छन्ति महद्वा जायते भयम् ।
अयं हि राजधर्मःस्यात् सतः संपूजयेत्सदा ॥
असतो दण्डयेदेव चासन्तश्चाप्यमी मताः । ( . ) संस्थिताः
कुशीलवास्तदा ( .. ) राः नाट्यविद्याविशारदाः ।
प्रेष्या वार्धुषिकाश्चैव व्यपेताः स्वस्वधर्मतः ॥
परपिण्डाशना नित्यं शूद्रप्रेष्यास्तदुन्मुखाः । अव्रताश्चाप्यवी ( ... ... . )॥
परवृत्त्यपहर्तारः व्यवहारपराजिताः । निर्लज्जा निर्भया भूयो नाहं निर्जितवानिति ॥
वदन्तः संचरन्तश्च धर्मवक्तृन्सदा सतः । दूष ( ... .... .... .... ... )॥
असत्यवाद ( .... .. ) राः चार ( .... ) परास्तया ।
कुक्षिभरणकर्मैकप्रधानाः पापचेतसः ॥
पुनरन्ये दुश्चरित्राः विज्ञेयाः स्युरमी खलाः ।
असन्त इति तान् राजा ज्ञात्वा सत्कृत्यमस्यति ॥
अनुक ( ... ) तान् भूमिहर्तृन् विशेषतः ।
अग्निदान् विषदांश्चापि शस्त्रपाणीन् धनापहान् ॥
क्षेत्रदारापहर्तृंश्च व्रात्यान् सर्वान् क्षतघ्नान् ।
मुखघ्नान् दुष्टचित्तांश्च मरयज ( ... ... ) दपि ॥

यदि त्वमास्तु ते तूष्णीं परलोकाननश्वरान् ।
क्रियासंपादिवान् सर्वान् नाशयेयुश्च तत्क्षणात् ॥
राजधानी यथा शून्या यथा कूपश्च निर्जलः ।
यथा हुतमनग्नौ च कृ ( . . ) कृतम् ॥
तादृशेषु तथा दत्तं भवेदेव न संशयः । न सुतस्य पितृद्रव्यमेवं वादी प्रसूर्मनाः ॥
पात्रान्नभुक्तिक्षा क्रूरः पोताऽस्य क्षीररोधकः ।
विश्वास(घा)पातको राजमित्रस्वामीगुरुद्विपः ॥
( ... ... ... . ) धिषद्रा भूमिहारकाः । एकादशैते कथिताः प्रोक्ता निष्कृतिवर्जिताः
कदाप्येषां नोपकारः कार्य एव महात्मभिः । एकादशासु चैतेषु विप्रवेदविवर्जिते ॥
नष्टशौचे व्रतभ्रष्टे मल्ले च कितवे तथा । रोदस्तु ( .. ... ... ) दं कृतम् ॥
नावेद्यपि प्रयच्छेत हेतुके नास्तिकेऽपि च । न पाषण्डेषु सर्वेषु वेदशास्त्रविदूषिके ॥
न बकव्रतिके पापे न वैडालव्रते तथा । न स्वाध्यायान्नरहिते तथैव च निराकृते ॥
धूर्ते ( ... ... .. . ) । ( .. . ) देवलके दत्तं भृतकाध्यापके तथा ॥
दत्तमेतेषु सर्वेषु वृथा दानं प्रकीर्तितम् । व्यर्थमब्राह्मणे दानं पतिते तस्करे तथा ॥
विप्रजातौ सूद्रा ( .. ... ) । ( .. .. ... ) म्रे मामयाजके ॥
वेदविक्रयिके चैव व्यालग्राहे तथैव च । ब्रह्मबन्धौ च यद्दत्तं तथैव वृषलीपतौ ॥
परिचारकलोकेषु आरूढपतिते तथा । भू ( .. ... .... ) ॥
दत्ततुल्यधनं वृद्ध्या गृहीतं चेत्सबन्धके । प्रत्यति ततो वृद्धिस्तत्क्रन्दति पुनर्हृतम् ॥
नवीकृते पुनः पत्रे तद्क्रिया तूत्तमर्णकः । गुप्तचौर इति ज्ञेयः ( .. . .. ) ति ॥

## उत्तमर्णाधमर्णदण्डः

पत्रे त्रिवारे यदि तु वृद्धिग्रहणभीतितः । नवीकृते तदा दण्ड्यो ऋणदाता भवेद्ध्रुवम् ॥
यदि मध्यस्थमुखतः गृहीतो मासमासयत ।
गृहीत ( --- ) त्तमर्ण ( --- ) [illegible] तदाखिलम् ॥

अघमर्षेण मग्नस्त्रैं देवमेतेन तत्रागुः । शृणुत्स्वमद्गतः परं शुद्धिर्न धर्मतः ॥

मरेदेव तत्रः परस्मात् शुद्धितो न्यायदूषितः ।

( ) नं ( .. .. ... ) शक्ताद्वै मस्नानंशिराग्रुम् ॥

माता दुशाशनमानीवा चेद्दर्श शृभगीः सुतः। पुत्रवशाना पुत्री चेद्दर्श हि मातृकोऽप्यति॥

मद्दसमुत्रुर्निनरो शाम् ( .. )।

स्वयं ( ... .. ) मेंग तु ( ) मोप्ति जनकः पुत्रवानपि ॥

मद्दत्तसुनुर्जनकस्य नूनं कृत्यानि सर्वाणि पृथग्विधानात् ।

कुर्वीत नो चेत्पितृपालकः स्यात् ( .... ) स्तदा पालकः ॥

( .......... .. ... ) पालकस्यैव सन्ततम् ।

सर्वाणि कुर्याद्विधिना जनकस्य तु नैव हि ॥

उभयोरपि चाशौचं पित्रोः कार्यं विधानतः ।

बन्धूनां भिन्नगोत्राणां समीपे त्रिदि ( ....... ) ॥

( .. ... ) पक्षिणी स्यात्तदेतत्सादरं पुनः ।

दशाहमध्ये संप्राप्तं स्वकालप्राप्तमेव चेत् ॥

अनुष्ठेयमतिक्रान्तं नैवेत्येवेति केचन । केचित्तु पुनरस्त्वाहुः अहर्मा ( ..... )॥

( .... .... ) र्थकम् । दशाहमध्ये विहितं तदूर्ध्वं स्नानमात्रकम् ॥

ज्ञात्याशौचं तु कथितं तस्मादेवयतोऽधिकम् । ततस्त्वेवं व्यवस्था हि महती परिकल्पिता

मासत्रये त्रिरात्रं स्यात् षण्मासात्पक्षिणी भवेत् ।

अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति ॥

बहूक्त्वा (क्त्या) किं महाभागाः ब्राह्मण्यं तु कलौ परम् ।

तिष्ठति श्राद्धसन्ध्याभ्यां तद्द्वयं तस्मात्तद्द्वयं चरेत् ॥

सन्ध्यां समन्त्रकां कुर्यात् ताम् मन्त्रान्विस्वरादिभि । :

रहितानेव महता यत्नेनैवाभ्यसेत्सुधी ॥

समीचीनोच्चारणेन सन्ध्या ब्राह्मणकारिणी । मन्त्राणां तु पु ( .. .... ... ) ॥

( .... ) तद्ब्राह्मण्यं च तादृशम्।
दोषयुक्तं गुणैर्हीनं तस्मात्सन्ध्यां यथाविधि ॥
सम्यगध्ययनं कृत्वा ब्राह्मण्यं तत्प्रसादये।
तेन तद्वैष्णवं धाम ( .... .... )॥
मृताहं समतिक्रम्य चण्डालः कोटिजन्मसु। भवत्येवेति सा प्राह श्रुतिस्तस्मात्तु तं चरेत्।
सगुणं शास्त्रविहितं येन मुक्तिं प्रपद्यते।
अनन्तास्तद्‌गुणाः सन्तु ते स्वसाध्याः स्मृताः सदा ॥
अनुष्ठातुर्मतश्चेमे मुख्याः केचन तान् ब्रुवे। स्वस्वपत्नीज्ञातिबन्धुकृतान्नेन कृतं यदि।
पित्रोः श्राद्धं समीचीनकृतं साद्गुण्यमृच्छति।
अकृतं चेत्तथा तत्तु ( .... ) पुरोक्तवत्॥
तदन्यथा चेत्पतितः सद्य एव भवेद्ध्रुवम्।
स्वशब्देनाखिलाः प्रोक्ताः कर्तारो भ्रातरः स्वयम्॥
पत्नीशब्देन तत्पत्न्यो निखिलाः प्रतिपादिताः।
ज्ञातिशब्देन जननी पित ( .... ) का॥
( ... ) का स्मृताः।
पितृव्यपत्नी तद्धर्मभागिन्यश्चापि कीर्तिताः॥
बन्धुशब्देन भगिनी पितृष्वसृसुतादिकाः। कन्या सं पितृश्राद्धं भिन्नभावेषु सर्वथा।
न कुर्यादेव धर्मेण यथा तथा ह [ ? ]। [ ... ] प्रदानं तत्र कीर्तितम्।
द्वितीयमपि तेन तुल्यं ब्राह्मण भोजनम्। तृतीयं च तथा कर्म पिण्डदानं ततः परम्।
तृतीयं च तथा कर्म पिण्डदानं ततः परम्।
एतत्त्रयं श्राद्धशब्दशब्दितं पुनरेककम्॥
तादृशे कर्मणि पुनः [ ... ]।
[ .... ] तत्पात्रे हुतशेषान्नपातनम्॥

मलकर्षं मन्त्रोभयं च तथा तत् स्नायिनी कृतिः ।
संप्रदानं मोक्षमुहूर्ते तत्राशौचानघा ( ... ) ॥
[ ... ] मोक्षमुहूर्ते च [ ... ] ।
[ ... .. ] ॥
[ . .... ] श्राद्धं परेऽहनि ।
कर्तुर्हस्ताहृते तस्मिन् आपोशानमन्त्रे यदि ॥

इति श्रीमार्कण्डेयस्मृतौ श्राद्धाख्यं प्रकरणं समाप्तम् ।

॥ शुभम्भूयात् ॥

---

धर्मार्थकाम ` .... । .... ....

तयोरतिक्रमे तत्तु तत्क्षणेन विनश्यति । ब्राह्मण्यं श्राद्धसंध्याभ्यां स्थिरमेतेषु तिष्ठति।

ब्राह्म ... .... । जन्मना शूद्रतुलितो ब्राह्मणो विवदाम्यहम्।

ब्राह्मण्यामपि भार्यायां सत्कृतायां .. । .. ब्राह्मणत्वं ब्राह्मणात्तादृशात्ततः।

तत्तत्कालेषु कर्माणि तानि तानि क्रमेण तु । कर्तव्यानि यथाय .... ।

.... त्कालातिक्रमेऽपि गर्भाधानादि कर्मणाम् ।

पश्चाद्वा शक्यते कर्तुं प्रायश्चित्तस्य प्र (?) पूर्वकम् ॥

द्विजानां तानि कर्माणि .... । ... प्रायश्चित्तस्य करणे सुमहान् पुनः॥

प्रत्यवायः प्रभवति तस्मात्तचित्तमाचरेत् । .... ॥

... ... ... । समाचरेच तच्चित्तं न चेच्छूद्रो भवेत्तु॥

विप्राभ्यनुज्ञा सर्वस्य कर्ममात्रस्य सर्वदा । संपत्करी च साद्गुण्यकारिणी च (तथा?) व

... ... स्मरार्दितः । शतरुद्रजपात्पूतो दशभिर्दिवसैर्भवेत्॥

विष्णुर्योन्यादिमन्त्राणां मुखे रजसि दर्शने ।

पुण्याहं वाचयित्वादौ नान्दीं कृत्वा शुभे दिने ॥

सुलग्ने स च कर्तव्यः स एव प्रथमो महान् । षोड ... ... कः॥

एतस्याः करणे सर्वकर्मणां त्यागसंभवम् । एनो महदवाप्नोति मूलहान्या द्विजोऽधमः॥

श्रेयसा ... ... । ... मूलदानानि गन्धपुष्पाक्षतादिभिः॥

दानानि विधिना कुर्यात् सोऽपि कुर्यात्ततः परम् । हरिद्रा कुङ्कुमा ... ॥

.... ... दिना तथा । द्वितीयं स्यात्पुंसवनं सीमन्तोन्नयनं तथा ॥

सर्वासां प्रथमे गर्भे च .. .... । ... शाणोत्सर्गे प्रसूतेर्वा परं पुनः॥

मन्त्रावृत्ति विधानेन चित्तपूर्वं समाचरेत् । शाखामन्त्र .... ॥

... .... .... ।

द्वादशानां श्रोत्रियाणामष्टानां यज्वनां न चेत् ॥

कपिलात्रयदानं वा ... । .... दशमस्य दिवसस्य प्र

निरीक्षणं च विहितं पुण्याहस्य च वाचनम्। नान्दीश्रद्धमुखं चापि फलदानादिकं तथा

... ... शिखामपि।

कर्मणो जातकाख्यस्य न लग्नादि निरीक्षणम्॥

यदा स्याज्जननं गर्भपातस्य तु तथैव हि। तत् ... ... ॥

... ... वैदिकम्। पितुः स्नानपरं कर्म जातकाख्यं श्रुतेरिदम्॥

तत्र स्नानममन्त्रंस्यादूर्ध्वमुत्पत्य केवलम्। नदी ह्रा ... ... ॥

उद्धृतेनाम्भसा स्नानं विहितं शास्त्रचोदनात्।

स्नानोत्पादनतद्वेगसंजातोऽर्घाम्भसा परम्॥

प्रीयन्ते पितरस्तस्य हेतुना ... । ... पितॄणां तुष्टिहेतवे॥

पुत्र जातात्परं भद्रं नान्यदस्ति जगत्त्रये।

सूतकान्तेऽपि वा कुर्यात् जातकाख्यं सुपावनम्॥

श्रयन्ता ... ... त्रिसूक्त जापादीनि पावनानि महान्त्यपि॥

मुद्गलादिप्रयोगानि बीजदाना ... न्यपि।

शक्त्या नित्यं प्रकुर्याच्च नक्षत्रान्त ... ॥

... ... ... गात्। उच्चाटनं च भूतानां पिशाचग्रहरक्षसाम्॥

दूरीकरणकार्याय कुर्यान्नीराजनक्रियाम्। दिने दिने विप्रपूजा सायंकाले विशेषतः॥

... ... तेन श्रेयो महद्भवेत्।

मातापित्रोः शिशोश्चापि पीडाया अल्पकारणात्॥

तद्भूया यश्च शान्तिः स्यात् जायते च पदे पदे।

फली करण ... ... ॥

... ... कस्तु पावके। अयं कस्यादिभिर्मन्त्रैः परिषेचनपूर्वकम्॥

कुर्याच्चापि विधानेन शिशोरायुष्यकारणात्।

जामितायाः ... ॥

... ... दशदिनेऽपि वा। सूतकान्तेऽपि वा कुर्याज्जातकर्म विधानतः॥

तस्यापि नामकरणात् पूर्वमेव विधीयते । अर्हनानां स्वकालेतु जातकर्म

.... ... इति धर्मज्ञा जगदुर्ब्रह्मवादिनः ।
स्वकालविहितेनैव कर्मणा येन केनचित् ॥
नामादिकेन कार्यं स्यात् जातकादीनि सोऽर्यमा ।
स्वकालातिक्रमे .... .... ॥
.... ... तूष्णीं पृथक्कर्तुं न शक्यते ।
नाम्नैव जातकं कुर्यात् नामान्नप्राशनेन च ॥
अन्नाशनं च चौलेन चौलं मौञ्ज्यागिलं पुनः ।
संतुष्ट .. .. ॥

.... स्वेन विहित मिति शास्त्रैकसंमतम् । मौञ्जी क्रिया तु सा सर्वकर्मणां प्रवरं पर

तां येन केनचित् कर्ममात्रे न तु योजयेत् ।
सा ब्राह्मणे सा प्रिया ॥
नास्यैवेति श्रुतिः प्राह तया सर्वाः क्रियाश्चरेत् ।
तन्नामव्यवहारार्थं नामकर्म विधीयते ॥
एकादशे द्वादशेऽह्नि नो तत्कुर्यात्तु मुख्यतः ।
भिन्न .. गौण एव परा न तु ॥
क्रियमाणेषु मौञ्ज्यापि जातका .... दिषकर्मसु ।
क्रमेणैव पृथक्त्वेन तस्मिन्नेवाह्नीति वै ॥

कर्तव्यत्वेन धर्मज्ञ सिद्धान्त इति शास्त्रहृत् । भिन्नहृतानि चेन्मोहाज्जनकादिवा ....।

.... ... र्थतां प्राप्य पुनः करणकर्मणः ।
पात्रभूतानि जायन्ते तानि तस्माच्च चाऽऽचरेत् ॥
तथापत्स्वपि वाच्यं ( वच्म्येव ) तत् पुनः पुनरर्हं दृढम् ।
पुरुषस्य ... .... [illegible] रक्षणम् ॥

अयुग्यवर्णं स्त्रीणां [illegible] चाख्यातोत्तरमेव वै । प्रवराहं सन्धिदीर्घस्वरवर्णसमं स्वकम् ॥

प्रवरं प्रवरार्हेण स · । चेष्टया भिन्नपरं तथा ॥
सुमूलामूलरक्ताढ्यं रक्त पादि । रक्षितं बीज निविडं मा (प्रा) ···· ॥
(अस्मिन्स्थले २२४ द्रष्टव्यम्)।
कलौ निषिद्धं विज्ञेयं घृतमघ्वादिकं तथा ॥
पूपदाज्यं क्षीरदधि तथा पक्वफलादिकम्।
पायसं पानकं स्वादु मिश्रयित्वा सुखोल्बणम् ॥
··· ञ्च स्वर्णपात्रेण यत्नतः।
पश्चात् कुर्यात् ब्राह्मणानां भोजनं च यथारुचि ॥
तत्पूर्वमपि केचित्तु तद्रूक्तं प्रवदन्त्यपि । तत्र प्रधानमन्त्रास्तु भूयांसः स्वदिकाः पराः॥
चौलकालस्तु विज्ञेयो (?) तार्तीयीकस्तु वत्सरः।
सग्रामनं च नियम औत्तरं केवलं परम् ॥
चूडा कर्मापि मौञ्जी च न कुर्याद्दक्षिणायने।
पितामहादिभिः पूर्वैः सद्भिर्मातामहादिभिः ॥
पितृव्यमातुलाद्यैश्च तत्पत्नीभिश्च मातृभिः।
समालोच्य प्रयत्नेन ह्यनुज्ञातश्च वैरिति ॥
···· धानं पुत्रस्य पितरः माता शुभम्।
य धाकृतं तूष्णीं स शिशु श्रेयसा न तु ॥
यावन्तं सर्वथा वच्मि पुनः पुनरितीव वै । चितैवाशा गुरूणां तु नामक्रमे पुरा किल॥
कृत्वाशास्त्रेण मार्गेण द्रव्यत्यागपुरस्सरम्।
साक्षाद्वसिष्ठो भगवान्विश्वामित्रोऽपि भार्गवः॥
नष्टपुत्रा बभूवुर्हि कुत्सवत्सादयोऽपि ते।
प्रवासादेत्य पुत्रं तं अङ्गादङ्गेति मन्त्रतः॥
कृत्वा मूर्धन्यवघ्राणमेवं कर्णे च दक्षिणे।
अङ्कमारोप्य तं कुर्याच्छ्रेयसे तस्य केवलम् ॥

अग्निरायुष्मानित्याद्यैः मन्त्रैर्ब्राह्मणवाचितैः ।
आशीर्वादाश्चनाआपि स्वयं स्वीकृत्य सज्जिरः ॥

अलं कुर्या ···· महिषा कृते । षष्ठेऽन्नप्राशनं कार्यं मासि तस्य समन्त्रकम् ॥
कौतुकाख्यक्रिया कृत्वा परं नान्द्या यथाविधि । शुभे मुहूर्ते सुलग्ने च विशेषतः ॥

···· ···· भिन्ना मन्त्रणकर्मणः ।
पुनर्जातकनाम्नोऽस्तु नियमः पूर्वमुक्तयोः ॥
दिनयोरेव तेनाऽत्र तल्लग्नादिनिरीक्षणम् ।
यथा संभवतः प्रोक्तं न तारादिबलादिकम् ॥

कुमारभोजनं चात्र बटुभिर्शिखिसंमयैः । पञ्च ··· नकैः कुर्यान्मात्रा सह शुचिक्रियैः

भक्ष्यभोज्यादिकैर्यो तु दद्यात्पूर्वं यथारुचि ।
दक्षिणादानकं तेषां भोक्तॄणां तेन वर्णिनाम् ॥
पुण्याहानन्तरं नान्द्याः परं कौतुकबन्धकम् ।
अङ्कुरारोपणं कुर्यात्तदुक्तेनैव वर्त्मना ॥
पश्चात्तत्संकल्प उक्तः प्रतिष्ठा जातवेदसः ।
शक्त्यां सत्यां सह मस्त ··· परं सताम् ॥

संनिधानेष्वसंसर्गं मुख्यं तत्केशवर्धनम् । शिखानिधानं च तथा तत्स्थानादनलस्य च ॥
उपसमिधमारभ्य भागा ···· क्षमेव वै । प्रधानहोमं कुर्वीत जयादि च ततः परम् ॥
सर्वं तदोत्तरं तन्त्रं विधिनैव समाचरेत् । नीराजनं चाशिषां च करणं पूजनं ततः ॥

ब्राह्मणानां विशेषेण ताम्बूलं दक्षिणादिकम् ।
तदङ्गत्वेन भूदानं ब्राह्मणानां च भोजनम् ॥
सर्वं सुमङ्गलीगानपूर्वकं सम्यगाचरेत् ।
मङ्गलानां च वाद्यानामस्मिन् कर्मणि वच्म्यहम् ॥
अन्त्य ··· करणं विधिचोदनात् ।
शक्त्यभावे तु तूष्णीकं यद्वा दैविकमुत्तमम् ॥

कर्ममात्रं सूत्रशास्त्रादाचारादिप्रचोदितम् । तन्मात्रमेव कुर्वीत तेन कर्म न दुष्यति ॥
वेदोक्तमन्त्रलोपे तु कर्म तत्तु प्रणश्यति । सर्वं वैदिककृत्येषु यथा या वेदचोदिताः ॥
मन्त्रा लुप्ता भवेयुर्न स्वरवर्णादिकैः पदैः । तथा यत्नेन कर्माणि सम्यगेव समाचरेत् ॥

यत्कर्म वैदिकं तत्तु विप्रसाक्षिकमाचरेत् ।
कर्म ब्राह्मणराहित्ये साद्गुण्यं नाधिगच्छति ॥
एकस्यापि क्रियाङ्गस्य सर्वतन्त्रविदस्ततः ।
सर्वशाखामन्त्रतन्त्रसूत्रसर्वस्ववेदिनः ॥

अपि कर्मसु सर्वेषु वैदिकेषु यदाम्यहम् । तं विप्रसाक्षित्वरहिते विप्रसाक्षिके ॥
कृतमप्यकृतं कर्म तत्क्षणादेव तद्भवेत् । सदप्यापि तथा भूयः कर्तव्यत्वेन चोदितम् ॥
शाखाविदां श्रोत्रियाणां यन्त्रतन्त्रक्रियाविदाम् । साद्गुण्यपरि " ण सद्धृताम् ॥
सभैव सर्वकर्मार्हो न कुतर्ककुचेतसाम् । वेदशाखागोत्रसूत्रभ्रष्टानां दुष्टचारिणाम् ॥
त्यक्तसंध्यापराणां च वेदमात्रैककोविदाम् । ... सुष्कानिरर्थका न ॥

न वैदिकक्रिया होसः स्यात्तेषामेकोऽप्यमन्त्रकः ।
मन्त्रविन्मध्यगस्चेत्तु सत्सभाप्यसभा भवेत् ॥

वेदभ्रष्टं तु विज्ञेयं कर्म षण्डा ... । .... सूत्रभ्रष्टस्तृतीयकः ॥
जातिभ्रष्ट इति ज्ञेयः सर्वकर्मविगर्हितः । सूत्रभ्रष्टश्च कल्माषः परिवित्तिसमस्सदा ॥
तस्मादेतान् सभामध्ये योजयेन्न तु वैदिके । सत्कर्माणि ॥

तानेतानखिलान्भ्रष्टान् वैदिको न समूहयेत् ।
उत्कृष्टं नोपनयनात्कर्मान्यदिह विद्यते ॥

वैदिकेष्वखिलेष्वेषु तद्धि ब्राह्मण्यमूलकम् । वसन्ते चोपनयनं ( ? ) चापि मधुरस तु ॥

मासाद्याः पञ्चमासाश्च वसन्त इति केवलम् ।
तत्सांनिध्यमहिम्नैव तत्पूर्वापरयोरपि ॥
अतो वसन्त मासाद्या गौणा इत्येव सूरिभिः ।
सिद्धान्तितः शास्त्रजालविधिभेत्रैर्ज्ञवादिभिः ॥

गर्भाष्टमो ब्राह्मणस्य मौञ्ज्या मुख्य उदाहृतः ।
कालः काम्यविधिर्मन्त्रैरष्टमः शुभ इत्यपि ॥
सप्तमस्तेन मनुना वर्णितो गौतमेन च । ब्रह्मवर्चसकामस्य पञ्चमोऽब्दो महात्मभिः ॥
वर्णितो मुख्य एवेति मेधावी यदि बालकः ।
तथैव षष्ठः श्रीराज्ञ तेजस्कामस्य चेत्ततः ॥
नवमोऽन्नाद्यकामस्य दशमोऽब्दोऽपि निश्चितः ।
एकादशस्य रुद्राब्दः वीर्यकामस्य वच्म्यहम् ॥
आषोडशाद्ब्राह्मणस्य कालस्तद्योग्यतावशात् ।
शब्दस्स तु सुविज्ञेयः न मर्त्यस्येति वै मनुः ॥
मेधाविनं सुवचसं श्रुतिमात्रेण केवलम् । वेदवर्णग्राहकं चेत् तदैवोपनयेद्विधि ॥
अनध्यायेषु सायाह्ने यामिन्यां दक्षिणायने ।
अष्ट काम्यकेलाग्नौ ··· दिवसेष्वपि ॥
कृतान्मोहाच्छलान्मौर्ख्यात्कृतोपनयनं वृथा ।
पुनः करणमाप्नोति यथायथात्र संशयः ॥
भिन्नशाखागोत्रसूत्रकृतोपनयनं कृतम् । रजस्वलापतिकृतं मुख्य ··· ॥
··· विना कृतं मोहात्पुष्पवत्यां च मातरि । महातद्गुरुभिः पित्रा पितामहपुरो
कृतोपनयनश्चापि कृतमेव न संशयः । अननुष्ठितसंध्येन ह्यकृतोपासनेन च
···· ··· पूर्वेद्युः श्राद्धभोक्तृणा । कृतं तद्व्यर्थमेव स्यात् तथा तस्मान्न तद्वरे
ब्रह्मवीर्यसमुत्पन्नो मूको यदि तु तं ततः । सम्यक् षोडशवर्षे जातकादि ··
··· चोपनयनं क्रियामात्रेण तन्त्रतः । तन्त्रं कुर्याद्दशेयं च तन्मन्त्रानखिलान्स्वयम्
वदेदेवं विधानेन कर्ता तत्कारणात्परम् । लिखित्वा सलिले ··· तां घृतेऽथवा
उपदेशे प्राशयेच्च समिदाधानकर्म च । तद्धस्तेनैव तूष्णीकं स्वमन्त्रोच्चयाऽखिलं यय
कारयेदेव तूष्णीकं क्रिया ··· रम् ।
सन्ध्यादिकं तथा नित्यं कारयीतैव तत्करात् ॥

पुष्कलानां तु चत्वारि पूर्णपात्रं तदुच्यते । गृहप्रवेश होमाख्ये ह्याग्नेयेऽत्र वरः परम्॥
याजकं न तु कर्ता स्यात्कारयित्रृत्वमेव हि । वरस्येति महात्मानः केचिदाहुर्मनीषिणः
तेषां तु हृदयं देवो जानाति किल नापरः । समावर्तनमौञ्ज्योश्च सीमन्ते पाणिपीडने

चौलगोदानचिन्तेषु शम्याः कार्याः प्रयत्नतः ।
कार्याः परिधयो नात्र शम्याभावे ते वृथा ॥

भवेयुरेव तस्मात् तेषु शम्याः प्रकल्पयेत् । यत्र यत्र चरोर्होमः तत्र तत्र स्रुवाहुतिः॥
परिधिग्रहणंकुर्यात्तस्थंत्राचो विधीयते । प्रधानहोमात्परतः वरयोः स्वीयवेश्मनः॥
समागमनकार्याय मार्गमध्येति दूरतः । दिवसानामनेकेषामतिक्रमणहेतुना ॥
विवाहाग्नेः रक्षणार्थं सायं प्रातस्तदा तदा । तत्कालमात्रसंकल्पं शुद्धयर्थमिति सं स्मृतम्
प्रातर्होमं करिष्यामीत्येवं संकल्प्य संयतः । शुचिहोमं प्रकुर्याच्च न चेत्स तु तु वैदिकः॥
वह्निर्नष्टो भवेदाशु तस्मात्कालेषु तेषु वै । शुचिहोमं विधानेन कुर्यादेव विधानतः॥
ध्यायात्संप्रयोगश्च संकल्पस्तदनन्तरम् । परिषिच्याऽथ मन्त्रेण होमश्च परिषेचनम्॥
एतावदेव कर्तव्यं नान्यत्किमपि तत्र वै । स्थालीपाकात्परं तत्र वरयोरुभयोरपि॥
प्राणायामो भवत्येव संकल्पस्य विधानतः । औपासनस्य शून्यस्य सद्यो ब्राह्मणसंनिधौ
ओं भूरिति मन्त्राणां पत्न्या वक्तुमशक्तितः । तथा वायुनिरोधस्य रेचकादेश्च केवलम्

नारीणां योग्यताभावात्तदर्थं स्वयमेव तत् ।
वरः सर्वं स्वयं कृत्वा तत्परं लौकिकं वचः ॥

परमेश्वरतुष्ट्यर्थं करिष्येति तया तु तत् । वाचयेदेव विधिना सर्ववैदिक कर्मसु॥

नियमोऽयं विधिश्चापि तथैवेत्याह सा श्रुतिः ।
सहत्वमुभयोः प्रोक्तं विवाहप्रभृतिस्फुटम् ॥

# औपासनारम्भः

तदेतत्सर्वशास्त्रेषु नीतं च बहुधा तथा । एवमौपासनस्यादौ समारम्भस्य यत्र तत् ॥

तिथेरुक्तः परं कर्ता प्रोक्तौपासनमित्यथ ।

आरप्स्येति वचः प्रोक्त्वा तेषु शृण्वत्सु सत्स्वपि ॥

तेनोक्तेऽथ भूयश्च यावज्जीवमिति ब्रुवन् । तण्डुलैर्वा यवैर्वेति यावदाधानमेव वा ॥

अथाधानं वाथ पुनः तदेतदखिलं परम् । एकोच्छ्वासेनैव वदेदेवं पत्न्यापि वाचयेत्

औपासनारम्भकाले ह्यभ्यनुज्ञा परास्मृता ।

ब्राह्मणानां सदस्यानां तत्रत्यानां महात्मनाम् ॥

अभ्यनुज्ञाप्रकारोऽयं यथाशक्त्युचितदक्षिणाम् ।

पात्रे कस्मिन्चिनिक्षिप्य ताम्बूलैः सहतां ततः ॥

पत्न्या सह समाधाय तिष्ठन्वेदमनु जपेत् । नमो महद्भ्य इत्येवं नमस्सदस इत्यपि ॥

तन्मन्त्रोच्चारणात्पश्चाद्भक्त्या साष्टाङ्गपूर्वकम् । अशेषे हे भे ब्राह्म भवत्पादाग्रदापिताम्

यत्किंचित्तामिमां भक्त्या क्षणिणो कृपयावयोः ।

स्वीकृत्यौपासनारम्भ योग्यतास्त्विति कृत्स्नतः ॥

भवन्तय(वन्त्य)नुगृह्णन्तिति वाचोक्त्वा पुनरेव वै ।

सं प्रणम्य समुत्थाय तिष्ठेतामभिमुख्यतः ॥

सा सभा चाथका दृष्ट्वा दक्षिणा तां च भक्तितः ।

समर्पितां तां संगृह्य अनयोर्वरयोस्सतोः ॥

औपासनारम्भयोग्यतास्त्वित्येव वदेत्र सा ।

एवं लब्ध्वाभ्यनुज्ञान्तां कुर्यात्संकल्पमेव तम् ॥

पूर्वोदितं यथावच्च ततस्तत्कालिकं पुनः । कृत्वा संकल्पमथ च चत्वारि मनुकं वदेत् ॥

अथ भूयो विशेषेण लिङ्गमन्त्रान्पठेन च । सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः
त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः । स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा
बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम् । तोमरं व्यजनं वामैः घृतपात्रं तु धारय
आत्माभिमुखमासीन एवं रूपो हुताशनः । एतान्मन्त्रान्पठित्वाग्न एहीति मन्त्रं जपे

अग्ने प्राङ्मुखदेवेड्य ममाभिमुखतःस्थितः ।
भवेति पूर्वभागेऽस्य सलिलं निक्षिपेत्स्वयम् ॥

जलेन तेन भीतस्तु स्वस्याभिमुख एव वै । विमायमुर्भवेदेव तदनन्तरमेव वै ।
प्रार्थयेत्तादृशं देवं सुप्रसन्नो भवेति वै । पश्चाद्भूयः प्रार्थयेच्च वरदो भवनेति च ।

प्रार्थनात्परतो भूयो गायत्र्या परितोऽस्य वै ।
शुद्धिं जलेन तां कृत्वा परिमृज्य स्वहस्ततः ॥

अलंकुर्यादक्षतैर्वा पुष्पैस्तत्कालसंभवैः । त इमे तत्र मन्त्राः स्युरग्नये नम आदिमः ॥
नमो हुतवहायेति नमश्चापि हुतार्चिने(षे) । कृष्णवर्त्मनेथ श्रोऽयं पश्चाद्वे यमुखाय च ॥
सप्तजिह्वाय च नमः नमो वैश्वानराय वै । अथ मन्त्रोऽयमुदितः नमो वै जातवेदसे ॥
( ? ) यज्ञपुरुषायेति चरमो मन्त्र ईरितः । एवमग्निमलंकृत्य परिषिञ्चेत्ततः पुनः ॥

अदितेऽन्वादिभिस्सर्वैः चतुर्दिक्षु निरन्तरम् ।
परिषिच्य विधानेन होष्यामि(मी)ति वदेद्द्विजान् ॥

जुहुधीति च तैरुक्तस्तत्स्थालीपाक देवताः । समुद्दिश्य हुनेन्नित्यं प्रातः सौर्याहुतिर्वरा ॥

कर्तव्यत्वेन सा प्राहः श्रुतिस्साध्वी सनातनी ।
तयैकया महाहुत्या सौर्यया गृहमेधिनाम् ॥

प्रतिनित्यं सर्वभूतक्षुन्निवृत्तिसमुद्भवम् । यत्फलं जायते तादृक् फलं प्राप्नोति तत्क्षणात्
अशेषव्रतकृच्छ्रौघ यज्ञदानतपोर्जितम् । फलं च तत्क्षणान्नूनं जायतेऽप्यल्पयत्नतः ॥
नित्यं प्रातर्वह्न्युपास्ति तत्परस्य महात्मनः । पुण्यायां वह्निशालायां तत्कार्यकरणोन्मुखाः

सर्वतीर्थानि विबुधाः ब्रह्मविष्णुशिवादयः ।
गङ्गाद्याः सरितश्चापि सागरास्सप्तपावकाः ॥

तपांसि कृच्छ्रयज्ञाश्च निवसन्त्यतिसाध्वसात् ।
नित्यौपासनिनस्तस्मात्तीर्थचर्यादयोऽखिलाः ॥

र्मास्ते यत्रसाध्याः द्रव्यसाध्यश्च केवलाः। कर्तव्यत्वेन विहिता न भवन्त्येव ते परम्
कर्मासमर्थस्य बोधिता शास्त्रजालकैः। नित्यमग्निं विवाहेद्ध मेतं त्यक्त्वाऽपि यो जडः
न्यं हि मनुते स शू ( ? ) शस्मृतः । अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥

आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः ।
तस्मात्तदाहुतिसमो धर्मोऽन्यो गृहमेधिनाम् ॥
नास्त्येव सुतरां लोके तस्मात्तदधिकः कथम् ।
एतादृक् कर्म सिद्ध्यर्थं ब्राह्मणस्य महात्मनः ॥

नि सर्वकर्माणि योग्यतापादकानि वै । सर्वाश्रमाणां गार्हस्थ्यं परमोत्कृष्टमुच्यते
ः प्रद्देशाशु चित्तशुद्धिसुखेन वै । श्रेयांसि संपदस्तत्र सन्तोषसुखमुत्तमम् ॥
तप्रत्यवायपरिहारोऽपि सूक्ष्मतः । प्रयासाधिक्यराहित्यं सर्वापभ्रंशसन्ततौ ॥
त्वैकसौलभ्यं सर्वाश्रमनिवासिनाम् । सर्वोपकारकरणयोग्यतातस्समं न तु ॥
न्तरमत्युत्तमतस्तं नित्यमाश्रयेत् । तदास्तां प्रकृतेः पश्चात्कुर्यादुत्तरसेचनम् ॥
पूर्ववत्प्रोक्तान्धमंस्था इति सर्वतः । द्वितीयमन्त्रेऽनुमते तृतीये च सरस्वते ॥
वसवितः परिषेचनहेतवे । पृथक् जलं प्रगृह्णीयान्न त्वेवं सकृदुद्धृतम् ॥
ान्नैर्ऋतादाग्नेयादथ नैर्ऋतमारुतात् । पश्चान्मारुतभूतेशात्तावदैन्द्रात्तु तुर्यके ॥
पूर्वापरयोः कार्यं स्यात्परिषेचनम् । श्रितायामाहुतौ कुर्यादुत्तमं परिषेचनम् ॥
विधमेव कार्यं विधिवदेव वै । अग्नेत्वमिति मन्त्रेण सुम्नायेति च मन्त्रतः ॥

स नो बोधीति च ततः उपस्थानं समाचरेत् ।
स्वस्तीति च वदेत्पश्चा दुपविश्याऽथ साञ्जलिः ॥

ा यशः प्रज्ञां विद्यांबुद्धिश्रियं बलम् । आयुष्यं तेज आरोग्यं देहिमे हव्यवाहन
समुच्चार्य प्रणमेत च तं शुचिम् । नित्यमेवं सायं प्रातः वैदिको ब्राह्मणोत्तमः
द्विजातीनां सूक्ष्मं हृदि [illegible] योगिनाम् । प्रतिमा ह्यप्रबुद्धानां सर्वत्र समदर्शिनाम्

आरोग्यं भास्करादिच्छेच्छ्रियमिच्छेद्धुताशनात्।
मननाद् ज्ञानमन्विच्छेत्तस्मान्मुक्तिं समाश्रयेत्॥

न कर्मणा न प्रजया न धनत्यागेनापि वा। तपसा केवलेनापि तथा पुण्यशान

ज्ञानं न जायते नृणां किंतु सच्चित्तशुद्धितः। सा चित्तशुद्धिस्तु तथा नित्यैः सेव(वि)त

नित्यानामपि सर्वेषां कर्मणां वैदिकः शुचिः।
श्रुतिश्च तादृशः प्रोक्तः विवाहो नैव नान्यथा॥

स विवाहः पञ्चहीनात्मको मन्त्रैकरक्षितः। स्वशाखयनुगुणग्रन्थदानत्रयसद्वा

तस्मात्तत्तुलितोऽर्म्य विशेषो न तु देहिनाम्।
औपासनस्तत्र जातो नित्योऽयं धार्य एव च॥
मन्थ्यो भवेदनुगतः श्रोत्रियागारतोऽपि वा।
आहार्यो विधिना भक्त्या उपवासोऽथवा पुनः॥
एकस्यैव हि कालस्य सायं वा प्रातरेव वा।
भार्यायाश्चाथ वा भर्तुः पक्षेष्वेतेषु सर्वतः॥
भवेद्व्याहृतिहोमोऽपि सर्वचित्ताय सर्वदा।
पाणिग्रहप्रधानाख्यहोमोऽयं यदि वै तथा॥
मन्थ्यस्समाहृतश्चेत्तु पश्चान्मन्थ्याग्निरेव हि।
सन्ध्या न मात्रे प्रभवेन्न चेच्छ्रोत्रियमन्दिरात्॥
आहार्य एव प्रभवेत् एवं स्यान्नित्यचोदना।
तथापि मन्थनं तूर्णीं यत्र कुत्रापि दारुके॥

कर्तुं न शक्यते किंतु तद्विहरयव(प)श्वकात्। पूर्वमेव प्रयत्नेन सुदिने च सुलग्ने

तदीयजनको भ्राता पितृव्यो मातुलादिकाः।
ऋत्विङ्मन्त्रं शिष्यगुरू तथान्यो यश्च कश्चन॥
रोहिण्यादिषु तारेषु जयापूर्णादितुल्यको।
भार्गवे गुरुवारे वा सोमे सौम्ये परे स्वके॥

मामात्प्राच्यामुदीच्यां वा संस्थिते कुञ्जराशने ।
शमीगर्भेऽथवा तस्य प्राच्यान्तरगता तु या ॥

शाखा तस्या दृढं स्थूलमरणीकाष्ठमुत्तमम् । सार्धहस्तमितं छित्वा द्विधा विदलने क्षमम्
नैर्लिरद्रं कृत्वेमं कुर्यात्तदरणोद्वयम् । मधुपर्कात्पूर्वमेव पश्चात्तत्पाणिपीडने ॥

तत्काष्ठमन्थनं कृत्वा वह्निमुत्पाद्य तं स्थिरम् ।
तं योजयेद्विवाहेऽस्मिन्नग्निस्थापनकर्मणि ॥

एवं यत्नेन संस्थाप्य स्वीकृताग्नेर्महात्मनः । मन्थ्य एव सदा वह्निः प्रभवत्येव नान्यथा
गार्ह्याधानिनो वह्निः सर्वस्मार्तेषु कर्मसु । अन्वाहार्यैक पचनो भवेदेव न चापरः ॥
नैत्यौपासनतः पश्चात्तत्साद्गुण्यैक सिद्धये । अनाज्ञातत्रयजपं कुर्यादेव तथा पुनः ॥

इदं विष्णुश्च जाप्यः स्यात्तथा व्याहृतयः पुनः ।
पश्चाच्छुचेः षोडशोपचारानपि यथाक्रमम् ॥

समर्पयामीति पृथगुक्त्वा तस्य समर्पयेत् । सर्वमेवं च निर्वर्त्य तमिमं मन्त्रमुच्चरेत् ॥

यस्य स्मृत्या च नामोक्त्या तपोहोमक्रियादिषु ।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

एवं तमिमुक्त्वात्र यस्मेकं पुनर्जपेत् । मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन ॥
यद्धुतं तु मया देव परिपूर्णं तदस्तु ते । इति जप्त्वा तस्य भस्म गृहीयाद्धारणाय वै ॥
इदत्सामेति मन्त्रेण रक्षार्थे तद्भवेत् त्वरा । तृतीयदिवसे पश्चान्महदाशीः क्रिया शुभा

## शेषहोमः ।

शेषहोमस्तुर्यदिनापररात्रे विधीयते । गन्धर्वोद्वासनं कृत्वा चोदीर्ष्वावेति युग्मनः ॥

विशेषतस्तयोः पूजां कृत्वा ते विसृजेत्परम् ।
अग्नीन्धनादिकं कृत्वा चक्षुरन्ते ततः किल ॥

अग्नीत्यादिकमन्त्रैस्तैर्जुहुयादाज्यधारया । पृथक् जयाद्यश्चात्र भवेयुस्तत्परं पुनः ॥
यक्षोद्वासनतः पूर्वं पश्चाद्वा यस्य मन्त्रको । भवेतां जपकार्याय दम्पत्योरुभयोः पृथक् ॥

यथालिङ्गं तच्छिरसः भूर्भुवस्सुवरितीतनः । आज्यबिन्दुक्षेपणं च पश्चान्नाकबलिः
अथ त्रिंशत्कोटिसंख्याक देवानां समर्चनम् । गौरीपूजा शचीपूजा गजविक्रयकोत्सवः
होलोत्सवरशूर्पदानं सर्वत्रनपरिग्रहः । देवतोद्वासनं पश्चाद्दरिद्रामलिलार्चनम्
सद्गुरसशाङ्कुरक्षपणः कौतुकादिविमोक्षणम् । मण्डपोद्वासनं पश्चात्स्त्रिवायनिकक्रिया
ब्राह्मणानां भोजनं च फलदानादिकं तथा ।
आशीर्वादक्रियाचान्ते विवाहोऽयं समग्रकः ॥
अनेन संपदः सर्वा सप्त सन्तय एव च । पुत्रान्पौत्रांश्च वैराग्यं ज्ञानं चात्र प्रतिष्ठितम्
तज्ज्ञानसिद्धये यज्ञो क्रियानित्या श्रुतीरिता. । कर्तव्यास्तुविशेषेणाकरणे प्रत्यवाय
अतो नित्या इति प्रोक्ता ब्राह्मणस्य महात्मनः ।
भार्यामाग्रहते यस्मिन् तस्मिन्नहनि ते तलाः ॥
पाकयज्ञा हविर्यज्ञाः सोमसंस्थास्तथा परः । ऋषयो देवताश्चापि पितरो ब्राह्मणस्य
सर्वे मिलित्वा संभूय कृतपाणिनिपीडनम् । समागत्य दृढं कठ परिगृह्णन्ति निर्भयान्
सम्यगस्मदनुष्ठानं कुरु देहिन्निति द्विज । नत्वान्त्यजामोऽद्य वयं वदन्त इति ताः क्रिय
तस्माद्विवाहितो विद्वान्तद्वादि नितरां भयात् ।
नित्यकर्मपरोभूयादन्यथा स्यादृणी स्फुटम् ॥
ऋषीणां देवतानां च पितॄणामृणमुत्थितम् । जायमानं समुद्दिश्य तदपाकरणाय वै
वेदोक्ताध्वरकृत्यौघान् शक्त्या कुर्वन् शनैः शनैः । ऋणत्रयात्सुप्रमुक्तो भवेदेव विचक्षण
अन्यथा तदृणीभूयस्तैर्युक्तश्चेद्विचक्षणः । कृतार्थः सिद्धिमाप्नोति नचेद्दुर्गच्छेदधोगतिम्
ते सप्तपाकाः कथिताः कर्मोपासनमादिकम् ।
वैश्वदेवो द्वितीयः स्यात्पार्वणं स्यात्तृतीयकम् ॥
अष्टकाख्या तुरीयंस्यान्मासि श्राद्धं तु पञ्चमम् ।
षष्ठं सर्पबलिः प्रोक्तं सप्तमं शूलिपूजनम् ॥
हविर्यज्ञास्तथा प्रोक्ता अग्निहोत्रं पुरोदितम् ।
दर्शादिः स्यात् द्वितीयस्तु तृतीयं तदनन्तरम् ॥

...ग्रयणसंज्ञं वै चातुर्मास्यं तुरीयकम्। निरूढपशुबन्धोऽथ पञ्चमः प्रतिपादितः॥
षष्ठः सौत्रामणिः प्रोक्तः पितृयज्ञस्तु सप्तमः।
तथैव सोमसंस्थाश्च ज्योतिष्टोमः स आदिमः॥
...अग्निष्टोमसंज्ञोऽथ द्वितीयः कथितो बुधैः। उक्थ्यश्च षोडशी पश्चादतिरात्रस्ततः परम्
अप्तोर्यामो वाजपेयाः सोमसंस्थाः प्रकीर्तिताः।
स एते निखिलाः कर्मविशेषाः नित्यसंज्ञिताः॥
दैनंदिनादन्यकृत्यानां पश्चाद्भाविन्य एव हि।
दैनन्दिनक्रियाश्चापि ता एता इति कीर्तिताः॥
स्नानसन्ध्याजपोहोमो दैवतानां च पूजनम्।
आतिथ्यं वैश्वदेवाख्यं षट्कर्माणि दिने दिने॥
...नि कर्माणि ब्राह्मणेन विजानता। पुण्यदेशेषु कार्याणि नापुण्येषु कदाचन॥
...पुण्यकाले योग्यकाले विशेषतः। विधिश्रद्धासमायुक्तं कृतं कर्म विशिष्यते॥
...कर्मणः श्रेष्ठं स्मार्तं कर्म ततः पुनः। श्रौतं कर्माधिकं श्रीमन्न तेन तुलितं क्वचित्
...र्वं सर्वजनैः परदुःखाकरं नृणाम्। हितं श्रेयस्करं भूरि कर्म कार्यं मनीषिभिः॥
...द्वेगकरं सर्वशास्त्रैकसंमतम्। अहेयं सर्वविन्दूनां यत्स्यात्कर्तव्यमेव तत्॥
...वैदिकं च समयं स्वकुलश्रमम्। स्वबन्धुशिष्टहृद्यं यत्कर्तव्यं न तु चेतरत्॥
...निन्दितं दुष्टं कुबन्धुभ्रातकारितम्। सतामसंमतं कर्म त्याज्यमेव विपश्चिता॥
सदा नैमित्तिकं कर्म नित्यात्कृत्याद्विशिष्यते।
नैमित्तिकं पुरा कृत्वा पश्चान्नित्यं समाचरेत्॥
...ने प्रश्ने तत्रैतद्धि विशोधितम्। श्राद्धाङ्गतर्पणस्यादौ सन्ध्याया अपि पूर्वतः॥
...विबुधैः उपदिष्टं हि यत्नतः। तस्मान्नैमित्तिको धर्मो नित्येभ्यः पर ईरितः॥
...देशेषु विधयो नात्र वशितः। एते स्युः धर्मदेशाश्च पठिता वेदशास्त्रयोः॥
ब्रह्मावर्तः कुरुक्षेत्रं पाञ्चालाः शूरसेनयोः।
मात्स्यदेशा मागधेयाः प्रयागः काशिकादयः॥

आर्यावर्तश्च परमः कृष्णसारनिषेवितः । यागदेश इति ख्यातः दर्भदेशश्च केवलः ॥
पर्णाभूमिश्च परमः पावनो देश एव च । शमीगर्भ प्रदेशश्च राजवृक्षनिषेवितः ॥
शम्यश्वत्थौदुम्बराढ्यो योऽयंखादिर पुञ्जवान् । बिल्वकाहिततिन्दूकवैकङ्कतविशेषतः ॥
देशाः पुण्यतमा ज्ञेयाः सर्वकर्मैक सुक्षमाः । सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ॥
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते । एष ब्रह्मर्षिदेशो ब्रह्मावर्तादनन्तरम् ॥
हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि । आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् ॥
तयोरेवान्तरे पुण्य आर्यावर्त इति स्मृतः । आर्यावर्तः पुरोदेशः ऋषिदेशस्ततोऽधमः ॥
मध्यदेशस्ततो न्यून आर्यावर्तस्ततोऽधमः । विष्णुक्रान्ता मही सर्वा पवित्रेयं स्वभावतः
तत्र दुष्टजना यत्र स देशो निन्दितोऽखिलैः । यत्र सज्जनसन्दोहो यत्र श्रोत्रियसंहतिः

आहिताग्निप्रचारश्च स देशः पर उत्तमः ।
न सन्ति सज्जना यत्र श्रोत्रिया मन्त्रवित्तमाः ॥

कर्मण्याः कर्मकुशलाः स देशो सभ्य एव वै । त्याज्य एव भवेन्नूनं वसन्तत्र नराधमाः ॥
कर्मभ्रष्टो भवेन्नूनं परलोकाच्च हीयते । यत्र विद्यागमो नास्ति यत्र नास्ति धनागमः ॥
यत्र बन्धुजनाः सन्तः स्वाचारैकप्रवर्तकाः । न सन्ति तत्र विबुधा न तिष्ठेत्क्षणमप्यपि
यत्र ऋत्विग्जनाभावः वेदशास्त्रश्रुतिस्तथा । स्वाहाकारस्वधाकारवषट्काराः कदाचन ॥
वसन् तत्र कथं मृत्युं जातैर्नगच्छति । देशानां पुण्यदेशत्वं महदैकनिवासतः ॥
अभद्रैकनिवासेन कुदेशत्वं तथा स्मृतम् । अङ्गवङ्गादयो देशाः पदूषका पदूकर्मेरकाः ॥
कदाचित्पुण्यदेशाः स्युः महतां संनिवेशनः । कदाचित्तदभावेन स्युस्ते पापविशेषणाः ॥

चण्डालादिप्रदुष्टा ये देशाः पुण्यविशेषणाः ।
देवस्थलानि श्रीमन्ति स तान्देशाश्च पुष्कलाः ॥

देवगृहा विमगृहा मं(?)भाभिरप वारिताः । उच्छिष्टादिप्रदुष्टाश्च जन्तुहिंसादिदूषिताः
गङ्गाप्रस्नमना नूनं पूताः मज्जनयोग्यकाः । भवेयुरेव दिवसैः कैश्चिदेकत्रिरत्रिभिः ॥
गोभिश्चरद्वाराशब्दैः दूषिता अपि वश्चिमवः । देवदेशविशेषाश्च धेन्वावासनिवेशनैः ॥
पुनः शुद्धा भवन्त्येव तथामन्त्राअर्जन च । पापानामपि पुण्यानां शास्त्रमेवं निरूपकम्

पवित्रस्यापवित्रस्य शुद्ध्यशुद्ध्योर्द्विजन्मनाम् ।
शास्त्रज्ञानां वाक्यमात्रमेकं मुख्यं निरूपकम् ॥

शास्त्रं चतुर्दशविधमिति केचिन्मनीषिणः । अष्टादशविधं चेति पुनरूचुर्महर्षयः ॥

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥

आयुर्वेदो धनुर्वेदो गन्धर्वो वेद एव च । अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादश स्मृताः ॥
चतुर्दशानां विद्यानां धर्ममूलत्वमीरितम् । नायुर्वेदादिकस्यैतत् तस्य दृष्टैकमूलतः ॥
नास्त्येव धर्ममूलत्वं स धर्मः श्रुतिचोदितः । धर्मःस्याच्चोदनाप्रोक्तस्तदन्यस्तूपचारतः ॥

लिङ्गादि रूपा सा ज्ञेया मुक्तिदा श्रुतिचोदिता ।
श्रुत्यन्तर्गतलिङ्लोट् तव्यप्रत्ययसुबोधिते ॥

धर्मशब्दो मुख्यतःस्यादन्यत्र ह्युपचारतः । पुराणाद्युक्त धर्माणां नानादानादिरूपणम्
सुकृतत्वं वदन्त्येते न धर्मत्वं तु वैदिकाः । धर्मत्वं किल तेषां तु गौण्या वृत्त्या न मुख्यतः

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
क्रियते यस्स धर्मः स्यादतोऽन्यो नामधारकः ॥

यद्यत्स्वं वा स्वसूत्रोक्तं यस्य कर्मप्रचोदितम् । तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥
छन्दोवदेव सूत्राणि भवन्ति खलु सूरिणाम् । वेदोक्तमपि सूत्रोक्त तुल्यं वैदिकोत्तमाः ॥
नाद्रीकुर्वन्ति यादं वै सूत्रकारस्तुतेऽखिलाः । सर्ववैदिक विज्ञानशालिनः किल वै यतः ॥
तस्मात्तदुक्तं वेदज्ञाः प्रत्यक्षश्रुतिचोदितम् । अपि त्यक्त्वैव सुदृढं सूत्रचोदितमेव वै ॥
स्वीकुर्वन्त्येव निश्शङ्कं सूत्रं यद्यपि केवलम् । पौरुषत्वात्कर्तृकं हि तथा स्यात्तत्तु सूत्रकम्
निश्शङ्कं ते न्यूनमेव नाधिकं पौरुषेतरात् । तस्मिन्वेदोपदेशेऽपि तेष्यां श्रावणकर्मणि
प्रधानहोमात्परतः श्रुतीनामुपदेशतः । परं कल्पोपदेशोऽपि क्रियते शास्त्रवाक्यतः ॥

तत्समत्वेन च तथा पाणिनीयस्य तत्परम् ।
श्लोः म्रोत्यादि ( ? ) स्वर्यादादि बोधकतत्कृतः ॥

शाखस्य तत्परं भूयः पञ्चादि ग्रन्थकस्य च । प्रमादिमूत्रकस्यापि मीमांसायुग्मकस्य च

अथात इति तन्त्रप्रकरणस्यापि क्रमेण वै । तत्तत्प्रसङ्गेन विद्भिर्नोपदेशो वेदकर्मणि

तस्मादेतानि सर्वाणि धर्मशास्त्राण्येव सर्वदा ।
पुराणधर्मशास्त्रादि(शास्त्रा)णि निखिलान्यपि ॥

न तैस्समानिति बुधाः प्रवदन्ति यतस्तु हि । नोपदिष्टानि तानि स्युः प्रतिमन्वन्तरं परम्
उपदिष्टानि तु पुनः यानि कर्माणि तादृशे । स्युरेतत्कल्पनीयानि गुरूणि प्रतिवत्सरम्

द्विवारं बहुधा कृत्वा यावज्जीवं विशेषतः ।
तस्मात्तु धर्मशास्त्रादि मोक्षादि निखिलान्यपि ॥
कर्माणि करणे नित्यान्युदयादिप्रदानि हि ।
त्यागे तु प्रत्यवायैकप्रदानि न भवन्ति हि ॥
तस्मात्तु दर्शिते वेदाः प्रमाणान्यखिलाः पराः ।
तद्भिन्नास्तदुपष्टंभकत्वे स्वलु हि कीर्तिताः ॥

आयुर्वेदादयस्तत्र चत्वारः केवलं नृणाम् । दुष्प्रयोजकत्वेन धर्ममूला भवन्ति न ।
आयुः परीक्षकत्वात्प्रथमस्तत्र तादृशः । युद्धोपकरणत्वेन द्वितीयोऽपि तथाविधः ॥

श्रोतुः सुखाकरत्वेन तृतीयोऽपि तथा ननु ।
न्यायेनानेन तुल्योऽपि स्पष्ट एवार्थसाधकः ॥
सर्वं श्रौतेषु सर्वत्र स्मार्तं साधारणं भवेत् ।
दिक् प्राच्युदीची प्राहुरिति ह्यासीनत्वं च कर्मसु ॥
तत् त्र्यङ्गाणामनुक्तौ तु दक्षिणाङ्गं भवेत्तथा ।
कुत्सितो वा महत्तस्माद्दक्षिणः स्यादकुत्सितः ॥

यज्ञोपवीतिना कार्यं सर्वं कर्मप्रदक्षिणम् । उपस्थानेषु सर्वत्र नोपदेशमनुच्यते ॥

अवस्थितिः स्यादर्घ्येऽपि विना सायं विशेषतः ।
आधानेन प्रकर्तव्यं कर्ममात्रं विचक्षणैः ॥

अपसव्यं तु पित्र्यं स्यात्प्राचीनावीतमित्यपि । नामान्तरं हि तस्यैव सव्यं दैविकमुच्यते

निवीतं मानुषं प्राहुः सव्येनैव च सर्वदा ।
स्थेयं द्विजेनोपवीतं विना तिष्ठेदपि क्षणम् ॥

यशोपवीनाभावेऽपि वाससा वाऽजिनेन वा ।
संधं द्विजेनातियत्नादन्यथा स्यात्तु पातकी ॥
गा मयाचारिका धर्मा जातिदेशकुलोद्भवाः
ग्रामाचाराः परिग्राह्याः ये च विद्याविरोधिनः ॥
र्मा वर्णधर्मा मात(त्र)धर्मास्तथापरे । क्रियाधर्मा लोकधर्मा यत्र यत्र यथोचिताः ॥
ाश्च विशेषेण नातिलङ्घ्याः कदाचन । यत्कृते दशभिर्वर्षैः त्रेतायां हायनेन तु ॥
रस मा सेन तदर्धाग्नानकलौयुगे । धर्मसिद्धिर्भवेन्नृणां कलिरमाधुस्ततो महान् ॥
सुतोत्पत्तिर्वानप्रस्थपरिग्रहः । अग्निहोत्रहवण्याश्च(विप्या)देहो लीला परिग्रहः ॥
ांसु कन्यासु विवाहस्तद्द्विजन्मनाम् । वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा
तश्चयनादूर्ध्वमङ्गस्पर्शनमेव च । प्रायश्चित्तविधानं च विप्राणामरणान्तिकम् ॥
ोपः मेतेषु मधुपर्के पशोर्वधः । दानहोमौ विना तूष्णीं पुत्रत्वेन परिग्रहाः ॥
ं चैव विप्राणां सोमविक्रयणं तथा । दीर्घकालब्रह्मचर्यं नरमेधाश्वमेधकौ ॥
सुतोत्पत्तिः दत्तकन्यापरिग्रहः । कमण्डलोश्च स्वीकारः कलत्रस्य प्रदानकम् ॥
ाय धान्यस्य मांसेन श्राद्धकर्म यत् । ज्येष्ठांशदानं च तथा कन्यादूषणमेव च ॥
बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः ।
आततायी द्विजाग्र्याणां धर्मयुद्धेन हिंसनम् ॥
र्मे तु निर्याणं शोधितस्यापि संग्रहः । महाप्रस्थानगमनगोसंज्ञप्तिश्च गोसवे ॥
यामपि सुराग्रहणस्य च संग्रहः । अघसंकोचनं तूष्णीं द्वेषदूराद्विना परम् ॥
पितृभ्यश्च शुश्रूषाकरणक्रिया । दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ॥
संग्रहे वृत्ते परित्यागो गुरुस्त्रियः । षड्भक्तानशनेनापि हरणं हीनकर्मणाम् ॥
सगोपाल कुलमित्रार्धसारिणाम् । भोज्यान्नं तु गृहस्थस्य तीर्थसेवा च दूरतः
गुरुदारेषु गुरुवद्वृत्तिकल्पनम् । ब्राह्मणादिषु शूद्रस्य वचनादि क्रिया अपि ॥
पाकादि कृत्येषु न्यङ्गशून्यतः । भृग्वग्निपतने चापि वर्ज्या नाहर्मनीषिणः ॥
पितः सन्तः पुरा किल महात्मभिः । निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः

काष्ठादिना खपानस्थममेध्यं निर्मृजेत च। यथाजलं निर्भयं च लभेत च भवेत च ॥
तथा सर्वं यथाशास्त्रं प्रायश्चित्तपूर्वकम्। कुर्यादेव विधानेन तथा सन्ध्यादिका अपि
आपत्काला कृताः पश्चाद्धर्मेयुनात्र पातकम्। कन्दमूलफलाङ्गारैः नामेध्यं निर्मृजेत च
पाषाणलोष्ठद्रुपत्रैः क्षुद्रैरर्मकपालकैः। आपत्सु निर्मृजेद्गुह्यं पुरीषोत्सर्जनात्परम् ॥

आपत्कल्पानि सर्वाणि विपत्स्वेव भवन्ति हि।
तान्यनापत्सु कुर्वाणो नरो गच्छेदधोगतिम् ॥
शौचयत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः।
शौचाचारविहीनस्य समस्तं कर्म निष्फलम् ॥
शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥
वस्त्रेणान्तरितं शिश्नं वामेनादाय पाणिना।
शुद्धाकारक्षिता मृत्स्ना शौचायालं समाचरेत् ॥
श्मशानवर्त्मवल्मीक द्रुम ध्यानजलस्थिताम्।
अन्यशौचावशिष्टा तु पारक्षारयुतां त्यजेत् ॥
रोगात्यन्तापरवशः राजपीडावशोऽपि वा।
पलायमानश्च भिया शौचं कालोचितं चरेत् ॥
अरण्यकेषु मृत्स्नाया मामेप्याहरणं विधिः।
नीरतीरे शुचौ मृत्स्नां विधायाभ्युक्ष्य वारिणा ॥

दक्षपाणिपुटाकृष्टे प्रथमं शोधयेन्मृदः। धात्रीसमानया यद्वा मृदामुष्ट्यर्धकल्पया ॥
आदाय दक्षहस्तेन वामपादौ नियुक्तया। मृज्जलोत्तरया पायुं क्षालयेत्पञ्चसंख्यया ॥
एकया क्षालयेच्छिश्नं दशभिर्वामहस्तकम्। मृत्स्नाभिः सप्तभिः हस्तौ परिमृज्य शुभैर्जलैः

एकैकया मृदा पादौ हस्तौ प्रक्षाल्य चाचमेत्।
एका तु मृत्तिके लिङ्गे तिस्रः सव्ये करे मृदः ॥

करद्वयेमृद्द्वयं स्यान्मूत्रशौचे प्रकीर्तितम्। शौचमेव गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥

त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम् ।
एवं शौचं दिवा प्रोक्तं रात्रावर्धं समाचरेत् ॥
पथि पादः समादिष्टो व्याधितानां तदर्धकम् ।
स्त्रीशूद्राणां च बालानां वृद्धानामन्यजस्य च ॥

गन्धलेपक्षयकरं शौचं कुर्यान्न संख्यया । विप्रशुद्धयवधिः प्रोक्तः सर्वेषां शुद्धिरीरिता पुनरन्यो विधिः शौचे सर्वस्थानेषु मृत्तिकाः । पञ्चवारं प्रकर्तव्या गृहस्थस्यैव केवलः ॥ एतद् द्वयं क्षत्रियाणां वैश्यानां तु तृतीयकम् । तदनुगुणितं शूद्रजातेरिति तथा परः ॥ आमाग्निचलने घोरे बहुमूत्रे च सङ्कटे । शरीरानुगुणत्वेन शौचकर्म समाचरेत् ॥ ज्वरातिसारादिकृत्ये जलेनोष्णेन तच्चरेत् । यथाशक्ति यथायोग्यं तदा सर्वं समाचरेत् भ्रमविस्मरणादौ तु मासवर्षद्विवर्षकैः । त्रिवार्षिकादिभिश्चापि सर्वसान्त्यादिके परे सर्वलोपे च संप्राप्ते तादृशस्य तु देहिनः । तत्कर्म निखिलं सम्यक् तज्ज्ञनास्तस्य मुक्तये स्वयं कुर्युस्तमुद्दिश्य तत्परं पुनरप्यति । प्रकृतिस्थाङ्गतस्यैव दृढकायस्य तस्य हि ॥ परिषद्दक्षिणापूर्वं चापामल्लानदानकैः । शतकेन सममेण पुनस्संस्कारपूर्वकम् ॥ धेनुदानैः शक्तितस्तैर्यावकाहारपूर्वकैः । पञ्चगव्यप्राशनेन ब्राह्मणानां प्रसादतः ॥ कथञ्चित्प्रकृतिं प्राप्त स्त्यक्तरसाध्योऽपि मुच्यते । प्रसङ्गादेतदुदितं चित्तं तस्यक्तकर्मणः एतच्चित्तसंछलद्वर्पात्परं कर्तुं न शक्यते । शौचस्थानं परित्यज्य पादौ प्रक्षाल्य चाचमेत् दन्तानां धावनं पश्चात्कुर्यादित्येष तत्क्रमः । दन्तधावनतः पश्चात्प्रक्रिया धर्मेण पुनः ॥ कुर्यान्मूत्रपुरीषे वा स्नानस्य परतोऽपि वा । सर्वः कायानुगुण्येन विधिर्भवति देहिनाम्

नोपरुद्धः क्रियाः कुर्यात्कर्ममध्येऽपि वा तथा ।
मूत्रबाधादिकाः प्राप्तौ तदा तत्कर्म संत्यजन् ॥
व्याहृतीनां जपं कुर्वन् इदं विष्णुं त्र्यम्बकम् ।
शक्त्या जपित्वा तत्कृत्वा पुनराचमनात्परम् ॥

तन्मन्त्रं न्यासपूर्वं वै दिग्बन्धनपुरस्सरम् । तद्व्याहृतीर्जपित्वैव पुनस्तत्कर्म चाचरेत् ॥ तदामूत्रं पुरीषं वा वस्त्रमध्यगतं यदि । तद्वस्त्रं संपरित्यज्य शक्त्या वस्त्रान्तरं पुनः ॥

शुद्धं धृत्वा शुचिर्भूत्वा पुनः कर्म समारभेत् ।
यथा वा स्यान्मनःशुद्धिः पुनः स्नानादिनाऽथ वा ॥

तत्कर्म साधयेद्भूयः तावता कर्म तत्पुनः । प्रनष्टं न भवेदेव सम्यक् संपादितं भवेत् ॥

प्राङ्मुखोदङ्मुखो वापि ईशानाभिमुखोऽपि वा ।
प्रातःकाले तु कर्तव्यं शुद्ध्यर्थं दन्तधावनम् ॥

दन्तधावनतः पश्चान्मन्त्रेणानेन तत्पुनः । काष्ठं परित्यजेदद्भिः प्रक्षाल्यैव तु दूरतः ॥
आयुर्बलं यशोवर्चः प्रजाः पशुवसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥
मन्त्रमेतं पुनः केचित्तत्स्वीकारे वदन्त्यपि । पुराणपठितं यस्मान्न नित्यं तु कृताकृतम् ॥
सर्वत्रैवं पुराणोक्त मन्त्राणां ज्ञेयमेव तत् । अपि वेदोक्तमन्त्राश्च विनियोजकवाक्यतः ॥

कृत्येषु विनियुक्ताश्चेत् त्यागे स्युः प्रत्यवायकाः ।
न चेत्तु प्रायिकाचारवर्त्मप्रोक्तिमतो तथा ॥

परित्यागे तु मन्त्राणां बाधकं नेति सूरयः । अर्थवाद ब्राह्मणानां विध्यनुब्राह्मणस्य च
मन्त्रत्वेनैव तूष्णीकं प्रयादनककर्मसु । तदनुक्तौ न किमपि बाधकं स्यात्कदाचन ॥

शिरीषार्जुनकारञ्ज खिरिबिल्वैः सखादिरैः ।
औदुम्बरैरपामार्गैः स कामी चेत्सदाचरेत् ॥

समच्छेदार्द्र सत्वचिभिः समपर्वनिरामयैः । अष्टाङ्गुलिससमायामैः कनिष्ठपरिणाहकैः ॥
कुर्यात्समैश्च मृदुभिः दन्तानां शुभधावनम् । अशोकजम्बुकुटजधूतप्लक्षादिमुक्तकैः ॥
स चम्पकैरपामार्गैः द्वादशाङ्गुलसंमितैः । दन्तशुद्धिर्मुमुक्षूणामथवर्णानुपूर्वशः ॥
ब्रह्मक्षत्रियविट्छूद्र शेषाणां दन्तधावनम् । एकैकाङ्गुलतो न्यूनं दशपर्वादिकक्रमात् ॥
धात्री द्रुमपचैरण्ड शैलूपोशीरसंभवैः । निम्बालिकुचसुश्रीरघूर्मैरङ्गुलिभिर्न [illegible] ॥
दर्भकाष्ठैर्वर्णकाष्ठैः वेणुकाष्ठैश्च कीचकैः । धात्रीतिन्त्रिणिककाष्ठैः न कुर्याद्दन्तधावनम्

अर्काङ्गार व्यतीपात जन्मसंक्रान्तिपर्वसु ।
रिक्तासु प्रतिपत्षष्ठ्योः कृत्तिकायां मघासु च ॥

रण्यासार्पभेरौद्रे विशाखायां व्रतेऽह्नि । श्राद्धाहे ग्रहणे चैवैकादश्यां व्रती नरः ॥

न कुर्याद्दन्तकाष्ठेन ब्राह्मणो दन्तधावनम् । कृतपर्वणिः सदा कुर्यादमा एकादशी विना॥
तयोरपि च कुर्वीत जम्बुप्रभाम्रपर्णकैः । मृताहे तु विशेषेण न कुर्याद्दन्तधावनम्॥
दन्तधावनतत्स्थाने शस्ता द्वादशसंख्यया । गण्डूषकर्म कुर्वीत तेनाप्यास्य शुचिर्भवेत्॥
सर्वपारपरतः प्रातः परेऽहनि विचक्षणः । दन्तानां धावनं कुर्यान्न तदूर्ध्वं कदाचन॥
अत्रोदयं श्राद्धमात्रे नान्येषां तु कथञ्चन । मङ्गन्महालयेऽप्येवं दन्तधावनतः परम्॥

## स्नानविधिः

स्नानं कुर्यात्ततः पश्चात्कार्याः सन्ध्यादिकाः क्रियाः ।
नद्यादिषु सदा स्नानं द्विवारं गृहिणां सदा ॥

त्रिवारं वनिनामुक्तं सकृत्तु ब्रह्मचारिणाम् । उत्तमं स्यान्नदीस्नानं तीर्थादिषु तथोच्यते
सरःस्वपि तटाकेषु ह्रदेष्वपि च मध्यमम् । कूपस्नानं सदा प्रोक्तं नोत्तमं मध्यमं न तु
अधमं हीति विज्ञेयं तस्मात्स्नानं नदीमुखे । प्रकर्तव्यं विशेषेण ब्राह्मणः कर्मकृन्महान्॥
ऋणप्रदाता वैद्यश्च श्रोत्रियः सजलानदी । यत्र नास्ति चतुष्टय्यं न तत्र दिवसं वसेत्॥
नदीतीरनिवासोऽयं ब्राह्मणानां धनं महत् । परमं कथितं सद्भिः स्वर्गद्वारकरः परः॥

ब्रह्महत्यादि पापानि नानारूपाणि यानि वै ।
नदीस्नानेन नश्यन्ति नित्यं स्नातुर्महात्मनः ॥

तस्मात्समाश्रयेद्विप्रन्नदीतीरं सुदुर्लभम् । देवानामपि सेन्द्राणां सर्वपापनिवृत्तये॥
तीर्थकोटिसहस्राणि ह्रदकूपसरांस्यपि । नदीमज्जनमात्रस्य कलां नार्हन्ति षोडशीम्॥
कनिष्ठदेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥
प्रभूतैधोदके ग्रामे निवासो ह्यथवा भवेत् । महात्मनो ब्राह्मणस्य वदन्त्येवं महर्षयः॥
गृहस्थो यदि शक्तःस्यादजस्रं स्नानकृद्भवेत् । द्विवारमेव विधिना सकृद्वाऽथ न चेत्पुनः॥
सकृद्वाऽपि सकृत्कुर्युः मध्याह्ने प्रातरेव वा । प्रातः संक्षेपतः स्नानहोमार्थं [illegible] विधीयते॥

मध्याह्ने कर्मबाहुल्यात्सम्यक् स्नानं विधीयते ।
सन्ध्याहोमः प्रातर्नित्यं मध्याह्ने देवपूजनात् ॥

महायज्ञाद्वैश्वदेवादातिथ्यात्कर्म गौरवात् । मध्याह्ने स्नानमधिकं प्रवदन्ति मनीषि

तथैव भूयो वक्ष्यामि प्रातः स्नानं यथाविधि ।
( . ) भ्योऽहोभ्यो गोभ्यश्च त्रिविधेभ्यश्च वाडवः ॥

अदृश्यश्चापि सततं भ्यो मुच्यते नात्र संशयः । प्रातस्नानेन सदृशं नास्ति कर्म पवित्र
प्रातःस्नानं ततः प्रोक्तं सर्वकर्मोत्तमोत्तमम् । प्राणायामस्य विधिना सर्वकर्मसु वेद
इदं करिष्य इत्येवं कुर्यात्संकल्पमग्रतः । ओं भूरिति प्राणायामजपः कार्यो मनीषिभि

आदौ सर्वेषु कार्येषु जामितारहितः शुचिः ।
तिथिवारादिकानुक्ता(न्) निर्दिशेत्कर्मजं ततः ॥

स्नानसन्ध्याश्रये होमे महायज्ञे विशेषतः । वैश्वदेवेन विधिना साङ्गं संकल्पमाचरे

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्तितम् ॥
अशक्तस्तु सकृच्चापि शिरःस्नानं विनापि वा ।
शीतोदकं विना भूयः स्नानमाकण्ठं तु वा ॥
कटिस्नानं जानुपादस्नानं वा सर्वथा पुनः ।
उष्णेन वा कीलालेन तद्विना मन्त्रतोऽपि वा ॥
भस्मना रजसा वापि स्नानं कार्यं मनीषिभिः ।
सर्वं शक्त्यानुगुण्येन शक्तिमुल्लङ्घ्य नाचरेत् ॥

सर्वेषामपि शास्त्राणामिदमेव मतो महत् । (स्नान)मुल्लङ्घ्य तूष्णीकं यो मूढो रोगयुग्ज
स्नानादिकं प्रकुरुते कर्मभ्यो हीयते हि सः । शक्तौ सत्यामुक्तकाले सूर्यस्योदयनाद्गति
तन्मुहूर्तद्वयात्पूर्वं स्नानं कुर्यादतन्द्रितः । तत्राशक्तस्य सूर्यस्योदयकालेऽथवा ततः

कण्ठस्नानादिकंकुर्यादुष्णेन सलिलेन वा ।
आर्द्रवस्त्रेण वा कार्यं निर्मृजेताथवा न चेत् ॥

धारणं शुद्धवस्त्रस्य तस्यमुपपत्तिकम् । प्रथमाङ्गं समंप्राप्य सत्योऽथ

स्नानं कार्यमुपायेन छायास्नानं तु वा चरेत् । अशक्तिर्यावदेव स्यात्तावदेवं समाचरे
प्रातर्मध्याह्नयोः स्नानं नित्यस्नानं प्रकीर्तितम् । उच्छिष्टानुपघातेषु अस्पर्शस्पर्शनेऽपि च
ग्रहसंक्रमणादौ च स्नानं नैमित्तिकं स्मृतम् । पुण्यमासादिकस्नानं काम्यं दैवज्ञभाषित
इष्टापूर्तक्रियायां तु यज्ञाङ्गं स्नानमुच्यते । मलापकर्षणं यत्तत् स्नानमभ्यङ्गपूर्वकम् ।
स्नानमेवं पुनस्तीर्थक्रियास्नानं तदुच्यते । स्नानमष्टविधं भूयो वारुणाग्नेयमारुतान् ॥

माहेन्द्रात्सार्थिवान्मन्त्राद्गौरवान्मानसात्तथा ।
वारुणं तद्द्विधा प्रोक्तं समन्त्रकममन्त्रकम् ॥

समन्त्रकं द्विजातीनां स्त्रीशूद्राणाममन्त्रकम् । नदीसरिद्वखातगर्तप्रस्रवणेषु च ॥
सरस्सु वा कृत्रिमेषु पुण्यतीर्थेषु वा तथा । वापीकूपतटाकेषु परकीयेषु वारिषु ॥
पल्वलेऽल्पजले स्नानं भवेद्वारुणमुत्तमम् । तदेकेनालिके स्नानं पुष्करिण्यां तु मध्यमम् ॥
कूपे वाप्युदपाने वा ह्यधमं मन्दिरे तथा । राजकार्यं प्रतिष्ठस्य सदर्शनत एव वै ॥
कार्यबाधकलग्नस्य न निन्द्यं गृहमज्जनम् । राज्ञोराजसमानस्य धुरिणस्याधिरासने ॥
सत्साम्राज्याभिषिक्तस्य गृहस्नानं न दुष्यति । नृपशत्रुमहाभीत्या ऋणदानातिपीडनैः
अज्ञातवासिनश्चापि गृहस्नानं प्रशस्यते । अवगाह्य शिरस्कं यत्तदाघ्र् काण्ठ(ण्ठ)मस्य

नाभिस्नानं कटिस्नानं द्वितीयमिति तज्ज्ञाः ।
आर्द्रेणवाससाऽङ्गानामभिमर्शनमित्यपि ॥
तृतीयं कथितं पश्चादुष्णाम्भः सिक्तवस्त्रतः ।
निर्णिक्ताद्गात्रमात्राभिमर्शःस्यात्तु तृतीयकः ॥

स्नानमेदं चतुर्विधं कथितं ब्रह्मवादिभिः । कल्पाम्भसि शिरोमज्जेभायगाहेत्तमुद्रे ॥

स्रोतसोऽभिमुखंस्ना(या)न्मार्त्रं नं चाघमर्षणम् ।
अन्यत्रार्कमुखो रात्रौ प्राङ्मुखोदङ्मुखोऽपि वा ॥
सन्ध्यामुख्यन्तु मध्याह्ने तथैवार्कं तयामयोः ।
निवृत्तेत्र सदाम्भावात्रानुमालाम्बरे जले ॥

अमरंपुरीपरस्येव गृहं चैलोत्थितस्य च । पुत्रजन्मनि कूपे महापाधमने तथा ॥

सम्यगञ्जलिना स्नायादल्पपात्रेण वा द्विजः ।
पीठेष्वेव गृहे स्नायात्पाषाणेऽप्यथवा तथा ॥

इष्टकासूत्रते देशे पल्वलेन तु सर्वदा । मृत्तिकामन्त्रविधिना स्नानं मध्याह्न ईरितम् ॥

जीर्णाङ्गा निखिलालोका नित्यशीतासहिष्णवः ।
निवाते आतपे नित्यं स्नानं कुर्युः समुन्मुखाः ॥

न मुखराऽलङ्कृतो रोगी स्नानं कुर्यात्कदाचन । अभ्यङ्गस्नानपरतः पङ्कत्वाप्सु(नि)मज्जनम्
कुर्यादेव कदाचिद्वा यथाकृच्छ्रमभाङ्मतः । गृहे स्नाने ( . . ) पितैः शीतलैर्वा
स्नानं कुर्यात्पुनः किं तु सुखोष्णेनैव पाथसा । सत्यामृद्धौ वृद्धिकामो सत्स्नायीत जलैर्हृदे
यदि स्नायात्कुबुद्धिस्तु फलंतन्नैहिकादिकम् । कार्यं विना सुखत्यागी पशुरेव न संशयः

वृथा सुखार्थी पापीयान् भवत्येव न संशयः ।
वृथा सुखं च तज्ज्ञेयं साप्यानिद्रादिकं स्मृतम् ॥

## सन्ध्याविधिः

सन्ध्याकाले सनिद्रो यः अभिनिर्मुक्त ईरितः ।
अतिपाप्यमगण्योऽयं तन्मुखं नावलोकयेत् ॥
अलक्ष्मीस्तन्मुखे नित्या ज्येष्ठा घोरा तथा पराः ।
दुश्रियो निवसन्त्येव हत्याब्राह्मणादिकाः खराः ॥

ब्राह्मणः सर्वयत्नेन सायं प्रातः समाहितः । सन्ध्यामात्रपरो भूयात्तावन्मात्रात्तरिष्यति
ब्राह्मण्यं ब्राह्मणानां तत्सन्ध्ययैव न चान्यया । क्रियया भवेन्नूनं प्रवदामि पुनः पुनः ॥

अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम् ।
सन्ध्यां नोपासते ये तु कथं ते ब्राह्मणाः स्मृताः ॥
अशुद्धो वा विशुद्धो वा सपवित्रापवित्रकः ।
सन्ध्यां तीर्थे ह्रदे वापि भाजने मृण्मयेऽपि वा ॥

औदुम्बरे वा सौवर्णे राजते दारुसंभवे । यत्र कुत्रापि वा नित्यं येनकेनाप्युपायतः ।
गृहीत्वा वामहस्तेन सन्ध्योपास्तिं समाचरेत् । पात्रासंभवे चैव वामहस्तस्थितैर्जलैः ॥

मुखेन मार्जनं कुर्यात्तत्काले न भारया । कराभ्यां तु कुशान्धृत्वा प्रागग्रेषु कुशेषु च

प्राङ्मुखोदङ्मुखो वापि सन्ध्योपास्तिं समाचरेत् ।
तिथिवारादिकानुक्त्वा ज्ञात्वा वा शुद्धचेतसा ॥

परमेश्वरमुद्दिश्य सन्ध्योपास्त्ये क्रियामहम् । सन्ध्याख्यामित्युदीर्यैव देवतीर्थाद्वारामनः

आपोहिष्ठेति तिसृभि मार्जयेन्मूर्ध्नि शुद्धये ।
ता एव तिस्रः परमा यजुर्न्तेन क्रियासु वै ॥

नवप्रणवसंयोगात्प्रतिपादादिषु क्रमात् । संवत्सरकृतं पापं तत्क्षणादेव नश्यति ।
नवप्रणवयोगेन क्षिपन्वारि पदे पदे । विप्रुषोऽष्टौ क्षिपेदूर्ध्वं अधो यस्य क्षयाय च ।

धाराच्युतेन तोयेन सन्ध्योपास्तिर्विगर्हिता ।
तामेतां गर्हितां सन्ध्यां महात्मानो महर्षयः ॥

पितरो न प्रशंसन्ति न प्रशंसन्ति देवताः । मन्त्रपूतं जलं यत्तदापोहिष्ठादिमन्त्रितम् ॥
पतत्यशुचिदेहे तु सद्यःपूतो भवेद्ध्रुवम् । सन्ध्यात्रयेऽपि कर्तव्यमापोहिष्ठादिमार्जनम्
सूक्तै रुद्रदैवतैरन्यैः कुशाग्रैर्दैवतीर्थतः । प्रोक्षणानन्तरं सान्ध्ये तन्मन्त्रैर्वाङ्गुलैः परैः ॥

सायमग्निश्च मेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत् ।
आपःपुनन्तु मध्याह्ने ततोऽप्यद्भिर्द्विराचमेत् ॥

गालवोऽत्र क्रमं प्राह मन्त्राणां मार्जनस्य वै । आपोहिष्ठेति नवकं दधिक्राव्णद्वयं ततः ॥
तद्देवनवकंभूयः चतस्रश्च हिरण्यकाः । एतत्क्रमेण तत्कुर्यान्मार्जनं त्रिषु कर्मसु ॥

मार्जयित्वा विधानेन गायत्र्या द्विपदाख्यया ।
हस्तेनोदकमादाय क्षिपेद्भूमावधोमुखम् ॥

बहिर्जले नित्यमेव पादमेकं जलेक्षिपेत् । पुनस्तथा परं पादं भूमौ संस्थापयन्ततः ॥
हस्तेनोदकमादाय तदाचमनकादिकाः । क्रियास्सर्वाश्च कर्तव्याः अर्घ्यदानादयो जले ॥
निवर्त्यास्तिष्ठतास्तत्र तस्मान्नीरात्पुनस्तदा । समुद्धरणमेव स्यात्तच्च हस्तेन नान्यतः ॥
बहिर्जलेनोद्धरिण्या न गृह्णीयाज्जलं बुधः । सर्वकार्येषु तत्किंतु हस्तेनैव समुद्धरेत् ॥
यदिमन्दिरसन्ध्यास्यात्तदाचमनकादिकाः । द्विमुख्योदकतश्चेत्तु तत्पानोद्धरणादिषु
पृथक् पृथक् च कथितमतिरात्रफलं शिवम् । द्विमुखीगतपानीयं गोकर्णेन यतन्यदि ॥

इत्याचमनादीनि कर्माणि कुरुते पुनः। अष्टोऽर्यामसहस्रस्य फलंप्राप्नोति पुष्कलम्

द्विमुखीगतपानीये गङ्गाद्याः सरितोऽखिलाः।
पुष्करादीनि तीर्थानि कृच्छ्राणि च तपांस्यपि॥
साङ्गावेदाश्च शास्त्राणि ब्रह्मविष्णुशिवादयः।
सर्वास्तीर्थाभिमानिन्यो देवता सागरा अपि॥

...योमहात्मानः एतदुद्धरणाय वै। सदावासं प्रकुर्वन्ति नित्यायत्तसमुत्सुकाः॥
...तु ब्राह्मणोनित्यं द्विमुख्युदकपारगः। नित्यकर्मकरोभूयात्तावन्मात्रेण केवलम्॥
...कर्मानुष्ठानान्निषिद्धकरणादपि। यत्पापं जायतेनृणां तत्सर्वं वै विनश्यति॥
...मेतत्परममज्ञेयं ज्ञानिनामपि। रहस्यचोधितं साक्षाद् देवदेवेन शंभुना॥
...पात्रे पूजयत्वे शिवं पतितपावकम्। तीर्थानामुत्तरं तीर्थं सुलभं सर्वदेहिनाम्॥
...पापौघहरमज्ञानोन्मूलकं तथा। तादृग्जलेन कर्माणि विशेषतो विचक्षणः॥
...कुर्यात्कृतार्थोऽयं तरत्यज्ञानजं तमः। तर्पिताः पितरस्तादृग्जलेन यदि वा सकृत्
...द्विजमानन्दं प्राप्नुवन्त्येव तत्क्षणात्। मोक्षायशिष्टमुदकं कृत्वा रक्षां ततोवरे॥
...समीपमानीय द्रुपदामित्यृचं जपेत्। पूरकेणोर्ध्वमादिष्टो धारयेदिन्दुमण्डले॥
...नाथसर्वाङ्गव्यापकं पापसञ्चयम्। रेचकेन समानीय पाणौ संस्थाप्य दक्षिणे॥
...तु क्षिपेद्भूमौ चोरवञ्चोचहस्ततः। तावन्मात्रेण निखिलं पापमाजन्मसञ्चितम्
...क्षणेनैव सत्यमेतत्प्रचोदितम्। द्वौ हस्तौ युग्मतः कृत्वा पूरयित्वोदकाञ्जलिम्

गोशृङ्गमात्रमुद्धृत्य जलं मध्ये जलं क्षिपेत्।
दिवाकरस्य तुष्ट्यर्थं प्राङ्मुखोऽम्भो पवित्रधृत्॥
उपवीती विधानेन मध्याह्ने चोत्तरामुखः।
सूर्यायैव तु गायत्र्या सावित्र्या चैव सन्ध्ययोः॥
प्रातर्मध्याह्नयोस्तिष्ठन् सायमासीन एव वा।
असावादित्यो ब्रह्मे तिष्ठत्वाऽऽत्मानं प्रदक्षिणम्॥

निवृत्त्यर्थमुपविश्य द्विराचमेत्। मन्देहानां वधार्थाय प्रक्षिपेदुदकाञ्जलिम्॥

त्रिसन्ध्यासु जपेद्देवीं विच्छिद्यैव पदत्रयम् । अविच्छिन्नं जपेद्यस्तु रौरवं नरकं व्रजेत्
महायज्ञे तु सततं निखिलं तन्मतं परम् । अङ्गीकृत्य श्रुतिः प्राह पञ्चोऽर्धर्चश एव वै ॥

पश्चात्सर्वाश्च सूक्तोत्तमं चापि प्रगृह्य सा ।
सावित्रीं तां त्रिरन्वाह पञ्चोऽर्धर्चश अनवानम् (?) ॥

इत्येवं त्रिकमस्या तु जपकालेऽन्वहं द्विजाः । यथेच्छतो जपेयुर्वै शाखाणां तु समत्वतः ॥
तुर्यपादस्तथाप्येको गायत्र्या श्रुतिचोदितः । परोरजसेसावदोमित्येवं पापघातकः ॥
मूलमुख्या तथा स्तुष्टः शिव च गोमरद्दकः(?) । इत्येवं विधया ज्ञातो गायत्रीमातृवर्णिनि
तन्मातरश्च सा ज्ञेयाः पृथक्त्वेनाष्ट ईरिताः । पधिमनद्विति मुखं वा त्वं हि तदनन्तरम् ॥

रोयोगौं स्र द्वितीया स्याद्यो देवी तृतीयकम् ।
जनयच चतुर्थं स्यादस्य प्रसेति पञ्चकम् ॥
रैरेधीचो सातु षष्ठं स्यान्निमिद्वेति सप्तमम् ।
यं वा याद्दोऽष्टमंस्यान्मातृवाक्यक्रमो ह्ययम् ॥
एतेषां मातृवाक्यानां जपमात्रेण सन्ततम् ।
सिद्धिर्भवेत्तु गायत्र्याः कालात्तस्य च गान्ध्ययोः ॥

चतार्थं तस्य नयेत्तु तदिदं गुह्यमीरितम् । कुशासुस्या समासीनः कुशात्पाणिर्जितेन्द्रियः ॥

गायत्री तु जपेद्विद्वान् प्राणायामत्रयान्वितान् ।
पादयोश्च तथा जान्वोः जङ्घयोर्जठरेऽपि च ॥

कण्ठे मुखे तथा मूर्ध्नि क्रमेण व्याहृतीर्न्यसेत् । मूरञ्जुद्धये न्यस्य भुवर्ज्ञानिकाद्वये ॥

ज्येष्ठाङ्गुलीद्वये धीमान स्वः पदं विनियोजयेत् ।
भूः पदं हृदि विन्यस्य भुवः शिरसि विन्यसेत् ॥
शिखायां हृदि विन्यस्य स्वः पदं कवचे न्यसेत् ।
अक्ष्णोर्भर्गपदं न्यस्य भ्रुकुटीषु धियः पदम् ॥

महाराजस्तदविन्यासः प्रोच्यते पुनरप्ययम् । हृदिन्तसवितुर्न्यस्य न्यसेत्कण्ठे वरेण्यकम्
भर्गो देवस्य होत्येवन्यस्तन्मध्यमयोरथ । धीमहनामिकामध्ये धियः कानिष्ठिके न्यसेत्

कारं स्वर्गरूपं स्यात् स्तेयदोषहरं परम् । देकाररजतप्रख्यमपेयवृजिनापहम् ॥
कारं मणिवर्णाभ मपाङ्क्तेयादि पापहम् । स्यकारं पिङ्गवर्णं स्याद्विश्वासद्रोहि पापहम्
कारं मरकताकारं पैशुन्याद्यघहं विदुः । मकारं स्फटिकप्रख्यं गुरुतल्पाघनाशनम् ॥

हिकारं गारुत्मताकारं तत्सङ्गादि महाघहम् ।
धिकारश्चि(श्वि)न्तयेच्छुक्लं क्षत्रहत्यादिदोषहम् ॥

कारो मम्ररूपोऽयं भार्याहरणदोषहम् । द्वितीयं चैव योकारं रुक्माभं पापनाशनम्
कारं सूर्यसंकाशं चिन्तयेत्कौर्यपापहम् । प्रकारं तिलवर्णाभं शिवसायुज्यदायकम् ॥
ारं तु सुवर्णाभं विष्णुसायुज्यदायकम् । सितवर्णं दकारं तु ब्रह्मसायुज्यदायकम् ॥
ारसुशिरः प्रोक्तश्चतुर्वदनसप्रभः । प्रत्यक्षफलदो ब्रह्मविष्णुरुद्रस्वरूपकः ॥
त्यं प्रथमं तत्र द्वितीयं वायुदैवतम् । तृतीयं सूर्यदैवत्यं चतुर्थं वैद्युतं तथा ॥
यमदैवत्यं पष्ठं वारुणमुच्यते । बार्हस्पत्यं सप्तमं तु पार्जन्यं त्वष्टमं विदुः ॥
नवमं विचाद्धैधं दशममुच्यते । एकादशं तु रौद्रं स्यादादित्यं द्वादशं भवेत् ॥
शं वैश्वदेवं साध्यं तत्र चतुर्दशम् । भौमं पञ्चदशं ज्ञेयं षोडशं भानुदैविकम् ॥
त्यं सप्तदशं गारुडं तदनन्तरम् । एकोनविंशं विज्ञेयं कौमारं चिन्तितार्थदम् ॥
नं चैकविंशत्यं प्राजापत्यं च विंशकम् । सर्वदैवतकंचेति चैकविंशकमक्षरम् ॥
तस्य विज्ञेयं महा ''स्यकं पुनः । रौद्रं द्वाविंशकं प्रोक्तं ब्राह्मं चैव ततः परम्
चतुर्विंशं तु चैवमक्षरदेवताः । जपकाले तु संस्मृत्य तासां सायुज्यगो भवेत् ॥
ं दर्शयन्मुद्राः सुमुखं संपुटं तथा । ततो विततविस्तीर्णौ(र्णे) द्विमुखत्रिमुखे ततः
पञ्चमुखं षण्मुखाधोमुखं पुनः । व्यापकाञ्जलिकं चैव शकटं तदनन्तरम् ॥

ग्रथितं यमपाशं च ततः स्यात्सन्मुखोन्मुखम् ।
विलम्बिमुष्टिकानामिमत्स्यकूर्मवराहकाः ॥
सिंहाक्रान्तं महाक्रान्तं ततो मुद्गरपल्लवौ ।
चतुर्विंशति मुद्रास्ताः कथिताश्च यथाक्रमम् ॥

दर्शयन्मुद्रा महाजनसमागमे । महापापमवाप्नोति तन्मन्त्राश्चा(?)पि हीयते ॥

क्षुभ्यन्ति देवगणाश्च पितरो विलपन्त्युत । तस्मात्सिद्धार्थिनस्तत्र यस्य कस्यापि देहिन
भक्ताय वैदिकार्थस्य(त)स्तुशुद्धस्य देहिनः । अगस्त्यैव वदेन्मन्त्रं नाभक्ताय कदाचन ।

कुर्यादाद्यन्तयोर्देव्या जपस्य ध्यानमुत्तमम् ।
तद्ध्यानं च प्रवक्ष्यामि तेषामेकं मुनीरितम् ॥
मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्री(स्त्र्य)क्षणैः ।
युक्तामिन्दुनिबद्धरत्नमकुटां तत्त्वार्थवर्णात्मिकाम् ॥
गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं ।
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥

इति ध्यात्वा सुखासीनो जपं कुर्यात् त्रिकर्मसु । हस्तेनावर्तयेद्देवीमक्षसूत्रैरथापि वा ॥

प्राङ्मुखोदङ्मुखो वापि जपमात्रविचक्षणः ।
सूर्यस्याभिमुखः प्रातः गुरुदेवाभिदिङ्मुखः ॥
न्या(ना)साम्न्यस्तदङ्मौनी गायत्रीजपमाचरेत् ।
त्रिविधो जपयज्ञः स्यान्मानसोपांशुवाचकः ॥

मानसो मनसःकार्यो मन्त्रवाक्यार्थचिन्तया । उपांशुरोष्ठसंस्पर्शमात्रस्य श्रुतिगोचरः॥
उच्चैर्भाषा जपः कार्यः परश्रवणगोचरः । मुक्तिदो मानसो ज्ञेयोपांशुः सर्वत्र सिद्धिदः॥

क्षुद्रकर्मणि भाष्यः स्यादित्युक्तः त्रिविधो जपः ।
प्रातरुत्थाय पाणिभ्यां हस्ताभ्यां दिनमध्यमे ॥
अधोमुखाभ्यां पाणिभ्यां सायं संलक्षितो जपेत् ।
तिष्ठन्नेव जपेद्देवीं प्रातरासूर्यदर्शनात् ॥
मध्याह्ने तु जपेद्देवी मासीनस्तिष्ठतोऽपि वा ।
कुशावृस्यां समासीनः सायं नक्षत्रदर्शनात् ॥
प्राङ्मुखस्तु जपेत्प्रातः मध्याह्ने प्रागुदङ्मुखः ।
प्रत्यङ्मुखस्तु सायाह्ने दैवे वा गुरुसंनिधौ ॥

तन्मुखस्तु जपं कुर्यात्तन्मन्त्रं तत्र सिद्ध्यति । अविदित्वा ऋषिच्छन्दो दैवतं योगमेव च

यो ध्यायेद्वाऽजपेद्वापि पापीयाञ्जायते हि सः।
अतः ऋष्यादिकाञ्ज्ञात्वा मन्त्रमात्रस्य मानसः॥

पं कुर्यात्प्रयत्नेन देवता तेन तुष्यति। मन्त्रसिद्धिश्च भवति तस्मात्तत्तु तथा चरेत्॥
न्त्रार्थज्ञस्य विदुषो नैतदावश्यकं परम्। ऋष्यादितत्परिज्ञानकथनं कृत्स्नमेव वै॥
र्वज्ञानोपायस्य सरण्याः प्रतिपादनम्। नित्यं जपेत्तु सावित्रीं सान्ध्यकर्मस्वतन्द्रितः
यत्नेन सहस्रं वै न चेदष्टोत्तरं शतम्। अष्टाविंशतिसंख्याकं दशान्यूनं कदाचन॥
 कुर्यादेव सहसा कुर्याच्चेद्ब्रह्म नश्यति। विशेषेणात्र भूयश्च ब्रह्मचारिगृहस्थयोः॥
अष्टोत्तरशतान्न्यूनमष्टाविंशतिमेव वा। वानप्रस्थयतीनां तु सहस्रान्न्यूनमुच्यते॥
यतिरत्र प्रकथितः कुटीचकबहूदकौ। हंसस्य परमहंसस्य न गायत्रीजपः स्मृतः॥
योर्जपः प्रकथितः प्रणवस्यैव केवलम्। सूतके मृतके वापि गायत्र्या जप उच्यते॥
सन्ध्यात्रयोदशैवेति प्रदोषेऽपि तथैव वै। देशक्षोभे महापत्तौ मार्जना(र्या)द्यसंभवात्
सन्ध्यागतं सहस्रांशु मन्त्रैः कुर्यादुपस्थितम्। जलाभावेनार्घ्यमात्रं रजसैतद्विधीयते॥

दिग्भ्यश्चैव विदिग्भ्यश्च देवताभ्य प्रणम्य च।
आत्मपादौ तथा भूमिं सन्ध्याकालेऽभिवादयेत्॥
आयुर्विद्या तथा रोग्यः श्रियः कामास्सुदुर्लभाः।
मनसा चिन्तितानर्थान्प्राप्नोति पुरुषर्षभः॥

अर्घ्यदानात्परं सम्यगुपविश्यासने शुभे। व्याघ्रचर्मादिके शुद्धे ओमित्येकाक्षरं मनुम्
आयातु वरदा चेति यदह्नादिति तत्परम्। सर्ववर्णेति च ततः ओजोसीत्यादिकं ततः

अत्यन्तसन्नकं जप्त्वा तदन्ते वेदवित्तमः।
अभिभूरोमिति प्रोक्त्वा गायत्रीमिति तत्परम्॥
आवाहयामीत्युक्त्वा च सावित्रीं च सरस्वतीम्।
छन्दर्षींश्च श्रियं पश्चात्प्रोक्तेषु च पृथक् पृथक्॥

आवाहयामीत्यावाह्य गायत्र्यादिकशेषकम्। समुदीर्याथ योन्यन्तो मन्त्रमध्ये पुनश्च वै
प्राणापानव्यानोदानसमानार्कवाक्यके। विनियोगपदं चान्ते प्रथमां तेन वर्णयेत्॥

ओं भूरिति च तस्याग्य वाक्यान्तं गण्डयेत्तरम् ।
तत ओं भुव इत्येव ओं स्वं भुव इति स्म वै ॥

समस्त वाक्यं तत्रआदौ महति स्म च । ओं जनः पश्चमं च ओं तपः पद्ममन्ययं ॥

ओं सं॒मस्यं सप्तमं स्यादूर्ध्वलोकैकराजकाः ।
भूरित्यादि महाशब्दाः सप्तव्याहृतिवाचकाः ॥
ओंकाररूपा इत्येवमोंकारो ब्रह्मवाचकः ।
एवं संचिन्त्य विबुधः ओमापो ज्योतिरित्यपि ॥

वाक्यशेषं पूरयित्वा तदन्ते पुनरेव वै । भूर्भुवस्सुवरोमुत्तरा सर्वे रेतैश्च मन्तुभिः ॥
त्रिवारं रेचकं कृत्वा पूरकं कुम्भकं तथा । मन्त्रज्ञो मन्त्रवाक्येन प्राणायामं समाचरेत्
सर्वकार्येष्वेवमेव प्राणायामविधिः स्मृतः । एवं कर्तुं शक्तिहीनः एकं वाक्यमशेषकम् ॥
तूष्णीकं वा जपेन्नित्यं त्रिवारं नासिकाकरः । प्राणायामफलं मूढो लभतेऽपि न संशयः

ब्राह्मण्यस्य प्राणायामः निदानं सा यथा शिवा ।
गायत्री सर्ववेदानां माता श्रेयस्करी परा ॥
सन्ध्याप्रयुक्तगायत्री मन्त्रसंख्यजपं ह्यहम् ।
करिष्येत्येव संकल्प्य पूर्वोक्तेनैव वर्त्मना ॥

जपं कुर्याद्यथाशक्ति तत्तन्यासादिकं पुनः । (मन्त्र)तत्तर्पिन्यासवीजमुद्राद्यादिकमप्यवि
आहिताग्नेर्वैदिकस्य मन्त्रार्थज्ञस्य कर्मिणः । अत्यन्तावश्यकत्वेन करणं नेति वेदिनः ॥
प्रोचुः किल महात्मानः तदेतदखिलं पुनः । वेदकर्मादिकं तूष्णीं तूष्णीकस्यैकतन्त्रिणः ॥
अमन्त्रस्य विहितं वैदिकस्य [illegible] तस्य चेत् । प्रधानवेदोक्तमन्त्रमात्रस्यैव परं पुनः ॥
उक्तिमात्रेण सन्ध्यामात्रं गायत्रमेव च । जपमात्रं प्रधानं चेत्तदुपस्थानमेव च ॥
गोत्राभिवन्दनं चैव दिङ्नमस्कारमध्यकम् । कर्तव्यत्वेन विहितं नान्यत्किमपि तस्य वै
तथा किमर्थमित्युक्ते तस्य वेदोक्तकर्मणः । अग्निहोत्रस्य मुख्यत्वात्तस्योद्धरणकर्मणः ॥
उदयास्तमनात्पूर्वं कर्तव्यत्वाख्यहेतुना । तत्रोक्तस्य तस्यास्य दुर्भात्त्वं न संशयः ॥
तान्त्रिकादपि च स्मार्ताद्वैदिकं कर्मसूरिभिः । सर्वोत्तरमितिप्रोक्तं तस्मादेतं तु दुर्बलम्

दीक्षासु चेत्पुनस्तत्र सन्ध्याकालेऽस्य केवलम् ।
परित्यागः प्रकथितो वाग्विसर्गात्परं पुनः ॥
अर्घ्यमात्राभ्यनुज्ञानं गायत्रीदशकस्य च ।
निखिलस्याङ्गजालस्य न्यासबीजादिकस्य वै ॥

स वाग्यतस्तप इति श्रुत्यैतद्धि निरूपितम् । नक्षत्रदर्शनात्पश्चाद्वाग्विसर्गश्च चोदितः ॥ तस्मान्नित्यं वैदिकः स्यादाहिताग्नेर्द्विजन्मनः । दशप्रणवगायत्रीमेकादौ सान्ध्यकर्मणि आपोहिष्ठात्रयंपश्चाद्दधिक्राव्णद्वयं तथा । हिरण्यवर्णाश्चत्वारः द्रुपदाख्या तथैकका ॥ गायत्री पापसन्त्यागे गायत्र्यर्घ्यं तथैकका । असावादित्य इत्येतदोमित्येकाक्षरं परम् आयातु मन्त्रस्तत्पश्चादुत्तमादिति तत्परम् । गायत्रीजपतः पश्चान्मित्रस्येति त्रयं ततः ॥ ओं नमः पश्चकं तत्र यास ·····तत्परम् । उत्तमेशिखरेचेति स्ततोमयाथ चरमा ॥

गात्रोभिवादनंचेति प्रातः सन्ध्या यथैव सा ।
सायं सन्ध्या मध्यमा च विशेषः पुनरप्ययम् ॥

तयोः सन्ध्ययो प्रोक्तः प्रथमप्रोक्षणात्परम् । सतारकनवकामित्यं जलप्राशनकर्मणि ॥

सूर्यश्चेति मनुस्त्वादौ मध्यमेऽऽपः पुनन्त्विति ।
अग्निश्चेति तथा सायं भेदस्तु श्रुतिचोदितः ॥

उपस्थानेऽपि मध्येऽस्मिन्नासत्येनोद्वयं पुनः । उदुत्यं च तथा चित्रं तच्चक्षुरिति तत्परम् ॥

उपोक्य सूर्यं तथा शिष्टा समयत सूरिभिः ? ।
सा ······ ····· हयैरित्येवं सभिरूपितम् ॥

चरमायां तु सन्ध्यायामिमंमे वरुणेतिवै । तत्त्वायामीति च ततः यच्चिद्धिते ततः पुनः यत्किंचेदं कितवासः श्रृचः ··· ··· । समग्रमन्यत्प्रकथितमेतावन्नाधिकं पुनः ॥ एतावदेवतेसर्वे महात्मानो महर्षयः । सप्तर्षयः काश्यपाद्या नारदाद्याः सुरर्षयः ॥ सनकाद्याश्चयोगीन्द्राः सर्वलोकोत्तमोत्तमाः । अकर्तुमन्यथाकर्तुं कर्तुं चापि जगद्वशे ॥ चराचरसुरासुरमिलितं शक्तिमत्तराः । अनया सन्ध्यया पूर्वं बभूवुर्लोकपूजिताः ॥ (एक)द्विश्चाश्च बहवः नैव स्युस्के तु ते पुनः । चत्वारिंशतिसंख्याकाः प्रातःकाले श्रुतीरिताः

एतत्किमित्यप्रधानान्ये गायत्र्यैवात्र कर्मणि । मन्त्रद्वयं विकल्पेनाधिकृत्य च त्रयं पुनः
· · रुपकार्येऽत्र प्रधानं चात्र केवलम् । ब्राह्मण्यमूलं गायत्री मात्रमेवात्र सम्मतम्
नान्यत्किमपि वक्ष्यामि सत्यमेव तथा पुनः । सत्यं सत्यं प्रवक्ष्यामि ·····धर्मो द्विजः
सर्वधर्मः सर्वगुरुः सा गायत्री विकारतः । दशप्रणवसंहिता कराङ्गन्यासवर्जनात्
दशप्रणव गायत्री केवलान्यापि सा तथा । सर्वकर्मसु · · · प्राणायामादिकर्मसु
अप्सावादिर्यमन्त्रोऽपि तद्रूपत्वेन वै भवेत् । सत्योंकारादिमन्त्रास्तु गर्भांशा एव सर्वथा
न तु प्रधानिनो ज्ञेया तत्स्थाने वेदवित्तमाः । हिरण्यशृङ्गमन्त्रादिपवमानादिकल्पव
यद्वा देवके. भूयः इदं विष्णुरादिकैरपि । अन्यैस्त्वथावेदगतैः यैः कैश्चित्तैस्तु पावकैः ॥

प्रोक्षणादीनि तान्यत्र कर्तुं शास्त्रेण सन्ततम् ।
शक्यन्ते किलतद्वत्त गायत्रीमात्रमत्यति ॥
विकल्पयास्यतो यच्चिम स्वीकर्तुं तत्र शक्यते ।
त्यागमात्रेण सा सन्ध्या तद्ब्राह्मण्यविनाशिनी ॥

नैव नित्यं प्रयत्नेन पुनः पुनरतीव वै । आवर्तयन् त्रिसन्ध्यासु स्वरवर्णादिकैरपि ॥

सा सम्यक् स्वरवर्णैकपठिता ब्राह्मण्यमूलका ।
सद्ब्राह्मण्यप्रदा नूनं न चेद्वै गुणयदायिनी ॥
तस्याः सामीचिन्यसिद्ध्येऽत्र सर्वे द्विजोत्तमाः ।
(वेदाध्य)यनकर्माख्यं चक्रभ्रमणशाणकम् ॥

नित्यं यत्नेन कुर्वन्ति न चेत्सा सर्वथा शिवा । सम्यगुच्चारणार्थाय न भवेदेव वच्म्यहम्
वेदाध्ययनसच्छिक्षा संस्कृतावाङ्महात्मनाम् । तस्स · रणाय भवेदिति सम्मतम् ॥
यस्त्यक्तवेदाध्ययनं गायत्र्युच्चारणाक्षमः । सम्यग्भवेदेव तस्माद्गायत्रीमात्रमत्यति ॥

तज्ज्ञैः सुशिक्षितो भीत्या तन्मन्त्रानपि सांगतः ।
अधीत्य कर्म तैः कृत्वा देही सार्यं कृती भवेत् ॥
न चेत्पाप्येव विज्ञेयो द्विजमात्रो नराधमः ।
नोर्ध्वलोकानवाप्नोति ह्यधोलोकान् स गच्छति ॥

गायत्रीमूलको विप्रो न निन्द्यःस्यात्कथञ्चन।
भूयोभूयः प्रवक्ष्यामि ब्राह्मण्यं तन्महात्मनाम्॥
गोपनीयं प्रयत्नेन स्पष्टीकरणाश्रयम्। सन्ध्याशिखोपवीतैस्तैरन्विष्टः प्रथमैः पदैः॥
ब्राह्मण्यं बुद्धिपूर्वेण पालनीयं महात्मनाम्। युगानुरूपाः सर्वत्र ब्राह्मणा भूतलेऽधिकाः॥
तथा देशानुरूपाश्च कदाचित्तु तथा तथा। प्रदृश्य(न्ते)त्रयंले सन्तो सन्तश्च ते पराः॥
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः।
यस्मिन्देशे यदाचारा ब्राह्मणा धर्मवर्धकाः॥
संप्रदायाश्च कुत्राश्च ताः कदाचिन्न लङ्घयेत्।
स्नानं स्नातजलस्नानं स्पर्शस्नानं समीक्षणात्॥*
सततं संगवस्नानं मध्याह्नस्नानमेव च। (            ) द्विषु तत्तेषां दूषणाय न॥
देशधर्मास्तादृशाः स्युः त एते दूषणाय न। नौपासनं क्वचिद्देशे न स्थालीपाकमेव च॥
न देवार्चा महायज्ञाः सान्ध्यं कर्मत्रयं च तत्।
एकदाका (      ) मन्त्राभसक्ति रपि केवला॥
प्रदृश्यते तत्र तत्र मृत्तिका शौचशून्यता। एकवारो धृतजला त्रिवारं च मनःक्रिया॥
एवं जातीयकाचारा युगदेशाविपर्ययात्। द्विजत्वजातिनाशाय न भवन्त्येव सर्वदा॥
परं तु तादृशं ब्रह्मदोषयुक्तं भवत्यति। सामीचीन्यं नैति तस्मात् तत्तिष्ठतु यथा तथा
तज्जातिभाय (          ) यन्त्यं न निन्द्यं पूज्यमप्यति।
अमशस्तं यद्यपि स्यात्तथाप्ये तत्तु जातितः॥
स्वीकार्यमपि संग्राह्यं वाङ्मात्रेण समर्चयेत्।
याचितस्तेन दद्याच्च शक्त्या तत्र तु वञ्चयेत्॥
तद्वचनेन ते देवाः वञ्चिताः स्युर्न संशयः। यतस्तु ब्राह्मणः सर्वदेवरूप इति स्मृतः॥
तदेतद्वास्तां बहुना पौनः पुन्येन किं वृथा।
स्नानौपासनतः पश्चात् कुर्याद्वै ब्राह्मगोचमः॥
वेदानध्यापयेच्छिष्यवृन्दकं शास्त्रमेव च। अधिगच्छेदीश्वरं च यदन्तरात्मकोऽप्यति॥

संतुष्ट एव प्रभवे ( ... . . ) भवेन तु । मध्याह्नस्नानपरतः ब्रह्मयज्ञं समाच

## ब्रह्मयज्ञः

उदयानन्तरं केचित्तमिच्छन्ति द्विजोत्तमाः ।
प्राक् सायान्तस्यकालः स्यादित्येवं वेदिनां मतम् ॥

प्रागग्रेषूदगग्रेषु दर्भेषु सुसमाहितः । प्राणानायम्य विधिना देशकालानुरीर्य तिथौ च प्रकृते पुण्यनक्षत्रादियुते शुभे । परमेश्वरतुष्ट्यर्थं ब्रह्मयज्ञेन संप्रति ॥ यक्ष्येऽहमिति संकल्प्य विद्युन्मन्त्रेण तेन वै । अवनिज्य करद्वन्द्वं त्रिराचामेत्ततः द्विवारं परिमृज्यैवमुपस्पृश्य सकृज्जलम् । शिरश्च चक्षुषी पश्चान्नासिके श्रोत्र एव

हृदयेवेलभ्य विधिना पश्चोर्ध्वंश एव च ।
ततः सर्वां च गायत्रीं व्याहृतीभिः समन्विताम् ॥

पादादिषु तथान्ते वा चोपदेशविधानतः । त्रिरन्वाह विधानेन सनवान ... ता

ऋचो अक्षर इत्युत्तथा त्रिवारं चार्थसिद्धये ।
शक्त्या ब्रह्मानुवाकोंघ मन्त्राणां ब्राह्मणस्य वा ॥
विधीनामार्थवादानां क्रमाद्भागान्दिने दिने ।
सत ( . . ... ... ) नखिलानपि ॥

अधीयीनैव धर्मेण तद्दीयेनैव नान्यथा । एवं स्वयं चर्मयित्वा समस्वरसमाश्रयान् उष्णैर्वेदद्वहिर्मासे मध्ये मनसैव वै । तं स्वाध्यायमधीयीत तपस्वी पुण्यवान्भवे ऋचामध्ययनेनापि भवेयुः क्षीरकुल्यकाः । भवेत्कल्पितवान्नित्यं तेषां च यजुषामपि

स्वरोच्चारणतो विद्वान् घृतकुल्या ( . . .. ) ।
प्रभवन्त्येव मननं तस्मामाध्ययनेन चेत् ॥
सोमधारा मधुकुल्या कारकोऽयं सदा भवेत् ।
तदन्तर्गतगाथानामितिहासानुरूपिणाम् ॥

पुराणानां च च ( . . . ) तीः प्रियाः । कल्याणस्थानत्रयोगजनको भवेदपि

यजेत्सर्वेन शक्तश्चेत् अनुवाकेन वाऽथवा। मन्त्रेण वाक्यमात्रेण ब्रह्मा तेनैव नान्यथा

ब्रह्मयज्ञं प्रकुर्वीत (                    ) नित्यमेव वै।
नमो ब्रह्मण इत्युक्त्वा परिधानीयकामृचम्॥
त्रिराहृदर्भपाणिस्सन्तृप्तिमात्रेण तत्परम्।
समापयेज्जलंस्पृष्ट्वा तान्दर्भांस्तत्रनिक्षिपेत॥

स्वाध्यायी तु वेदस्य ब्रह्मयज्ञाय सन्ततम्। इषेत्वेत्यनुवाकान्तमनुवाकांस्ततः पुनः॥
चतुरश्चीनथद्वौ वा यथाशक्ति समभ्यसेत्। अभ्यस्तमात्र (       ) मधीयीतैव तत्परम्
भद्रं कर्णेभिरित्यत्र नात्यन्तं ब्रह्मपाठके। मन्त्रद्वयं त्रयं वापि समधीतैव तत्परः॥

ऋग्वेदेऽप्यग्निमीळेति अग्नआयाहि सामनी।
शंनोदेवी (      ) परमे वेदवाक्यमृचं तु वा॥

वेदेष्वधीत्य विधिना साक्षात्कल्पे ततः पुनः। अथातोदर्शपूर्णेति प्रणवत्यन्तकं जपेत्॥
इहिरादैव सूत्रमध्ये तत्त्रयं समुदीरयेत्। ऋग्वेदलक्षणेचापि ग्लौःग्मेति च पदेस्तथा॥
पञ्चसंवत्सरमिति ज्योतिः सूत्रं च सद्वदेत्। मयरेत्यादिकं सूत्रं छन्दोविचिति मध्यगम्

अथाऽतो जैमिनेः सूत्रमथाऽतो व्यासभाषितम्।
अर्हं वृक्षस्य तत्पश्चाद् भूर्भुवः सुवरित्यथ॥
नमो ब्रह्मेति तेषां तत्परिधानीयकामृचम्।
त्रिरुक्त्वा वृष्टिवाक्यं च समुच्चार्य अद्भं स्पृशेत्॥

दर्भान्दर्भानस्तु नित्यं निक्षिपेदिति तत्क्रमः। यावदध्ययनाशस्य वेदाध्येतुर्दिने दिने॥
फलं भवति तावच्च वेदानध्येतुमप्यति। फलंभवेत्सत्यमुक्तमात्रविधस्य कर्मणः॥
वेदिवेदैकसवित्तशालिनः कृतिनः सतः। गुह्यमेतत्प्रकथितं समस्तोपनिषद्गतम्॥
अजस्रं ब्रह्मयज्ञान्ते यत्किञ्चिद्दक्षिणा ततः। प्रदद्यात्तु तदशक्ते सायं यज्ञो दिने दिने
धर्मत्वेन विहितो जामितारहितेन वै। ब्रह्मयज्ञमकुर्वाणो ब्राह्मणो यदि मूढधीः॥
भुङ्क्ते तूष्णीं स च एव वेदद्रोह्यपि दुर्मुरोः। देवद्रोही पितृद्रोही तीर्थद्रोही भवेदपि॥
तस्मात् ब्राह्मणो विद्वान्देवर्षिपितृतुष्टये। स्वानृण्याय भुक्त्यर्थं ब्रह्मयज्ञपरो भवेत्॥

शुक्ष्माण्डजपमन्त्राणां त्रिवारपठनेन च ।
दत्तया ब्राह्मणतुष्टया च शुद्धो भवति नान्यथा ॥
त्तरयभर्तुर्हितायाऽत्र प्रयत्नेन सुवासिनी । पाकयोग्यं शुद्धमन्नं पात्रेणानीय वै क्रमात्
भवनादेव भवने स्वीयपाके ह्यदुर्लभे । शुल्किकायां प्रतिष्ठाप्य पाककर्म समाचरेत् ॥
न तृणैरादरेद्वह्निं काष्ठैर्वा नव ··· ··· । मृण्मयेनापि पात्रेण दारुपात्रेण वा तथा ॥
तल्केन शाकलेनाऽपि नोल्कामूलेन तं हरेत् । यथाहरेत्सु मोहेन तद्गेहश्रीर्विनश्यति ॥
प्रलक्ष्म्योऽत्र प्रवर्धन्ते विपदश्च तथा तथा । भवेयुरेव भूयिष्ठाः तथा दुर्गतयः पराः ॥
ाहराग्निविशेषस्य तदागमनमात्रतः । भर्ता ज्ञात्वा तु तत्पश्चात् तस्याः कर्म विरोधवित्
दूराद्विसृज्य तं वह्निं तां निर्भर्त्स्य च निर्घृ(र्घृ)णः ।
तदलक्ष्मीविनाशाय स्वयं प्राङ्मुखतो जपेत् ॥
सुमङ्गलीरियं मन्त्रजपं चापि भ्रु(?)यक्षितैः । इमां त्वमिन्द्रमन्त्रं च श्रियं जात श्रियस्तदा
श्रीभूसूक्ते जपं चापि त्रिवारं तदनन्तरम् ।
कृत्वा तु मङ्गलस्नानं भवेतां च ··· ततः ॥
ब्राह्मण य ··· संयुक्तौ कृताहारौ दिनत्रयम् ।
तेन श्रीको भवेतां तौ तत्र पकान्न भक्षणात् ॥
ानात्परं च पुण्याहं वाचयित्वा ततः परम् । प्रतिष्ठाप्य शुचिगेह मध्येणाग्नौकयत्मेना
्खान्ते जुहुयादाज्यसहितं चरुतन्त्रतः । श्रीसूक्ताभिर्विधानेन पञ्चवारं ततः पुनः ॥
मक्षोद्वासनतः पश्चाद्गौरेकात्र च दक्षिणा ।
परिकल्प्या ··· दृघोरामापदं प्राप्नुयात्तु सः ॥
ाजस्य शुद्धपाकेन स्वयं शुद्धः स्वलंकृतः । संजातमन्नं सुमुखं भुञ्जीयात्प्राङ्मुखो द्विजः
रपाको नैव भवेत् पराम्नः परमन्दिरः । पराधीनो भवेन्नैव परः प्रैष्यश्च वाडवः ॥
नित्याग्निको भवेच्चापि सोमयाजी भवेत च ।
यद्वा भवेदाहिताग्निः समन्त्रः सर्वथा भवेत् ॥
··· न म्रियेतानाहिताग्निः कथं चन । म्रियेतेनासोमयाजी ह्यमन्त्राग्निर्म्रियेत च

र्मकरो भूयात् नित्यं श्रोत्रियपूजकः। उदासीनो श्रोत्रियेषु सुमहात्मसु संमुखः॥
न्वहंगेही तटस्थो मध्यमेष्वति। श्राद्धकर्मपरो भूयाच्छ्रद्धालुः कर्मभक्तिकः॥
र्मसु सर्वेषु शौचमक्रोधमत्वरा। सत्राह्मणान्वेषणं च सौमुख्यं सत्यभाषणम्॥
गृहस्थैक द्रव्यं चापि तथा पुनः। अदानं सर्ववस्तूनां यस्य कस्यचिदत्र वै॥
वाध्यश्च तत्कथाप्रतिपादनम्। तद्धर्मशास्त्रस्यैकचिन्तनं तन्निरीक्षणम्॥
ानां द्रव्याणां वस्तूनामवलोकनम्। समीकरणमेतेषां तत्र तत्र नियोजनम्॥
कादेतत्त्यन्ताश्यकत्वतः। समनुष्ठेयमेवस्यात्पुनरन्यानि यानि वा॥
र्याणि भूयश्चानुष्ठेयानि विशेषतः। अत्र स्नानातपरंसन्ध्यामात्रं होमश्च केवलः
यनं नैव प्रवक्तृत्वादिकं तथा। अभिवादनकार्याणि बन्धूनां महतामपि॥
ग्रहणं पुनश्च प्रतिपादनम्। वर्जयेत्तु विशेषेण श्राद्धीयेकानि तत्करः॥
नीहान्य विशेषनियमो मतः। एतद्दिनत्रयमिति केचिदाहुः मनीषिणः॥
वश्च तद्दिनत्रय कर्मणा। सर्वे रागाणां स्मिन् · · पस ··· पुनः॥

परं तप मात्रं स्यादेकभुक्तिश्च केवला।
दिवसे तत्र विज्ञेया तच्छ्राद्धं तर्पणान्तकम्॥
इत्युक्ता सर्वशास्त्राणामेतावान्निश्चयः परः।
निमन्त्रिणां ब्राह्मणानां पूर्वरात्रौ प्रचोदितम्॥
······क्ति परतोक्षेयं · सनकृतेः परम्।
परेद्युर्देवं प्रातश्च सन्ध्याहोमात्परं पुनः॥

## श्राद्धे निमन्त्रणक्रमः

आमन्त्रणं तद्वोक्तॄणां विधिना चोदितं तथा।
संकल्पानन्तरं श्राद्धे पूर्वं ... रेव वै॥
ः पित्रुद्देशेन तद्दिने। पितृभक्त्या श्राद्धकर्ता मासषट्कस्य पूर्वतः॥
कुर्यान्मनसैव विचक्षणम्। वेदवाची महाभाग साचारे साग्निहोत्रिणे

ब्राभिप्रायाः शिखाश्चाप्र केचन अन्यदर्शिशाखाशाखा गोत्रसूत्रावलम्बिनः
... ... --- धर्मगा । अपात्रभूता विज्ञेया. तूष्णी ब्राह्मणशब्दिताः
यया केवलया तपसा वापि पात्रता । यत्रचित्रिमिंचोभे तद्धि पात्रं प्रचक्षते ॥
विधब्राह्मणानां दुर्लभे केवलं पुनः । स्वयन्तुप्यत्र यत्नेन भोक्तॄः संपादयेत्तथा ॥

अश्रोत्रियं श्रोत्रियं वा ब्रह्मन्नामधारकम् ।
स्वकीयेष्वेव भोक्तारं यत्नात्संपादयेद् द्विजम् ॥

सदीयाश्चेत्र सम्यक् तत्स्वरूपं प्रकाश्य. । ज्ञानं भवति तस्मात्तु परेषां दुर्लभे स्वयम्
पुत्राः श्राद्धयोग्यास्ते योनिसंबन्धवर्जिता । गोत्रसंबन्धरहिताः मन्त्रसंबन्धशून्यकाः
नेकेनाप्युपायेन वेदाक्षरसुपूरिते । सुशुद्धे ब्राह्मणमुखे स्वान्नं पातयेत्सुधीः ॥
श्रौ तिष्ठति यस्यान्नं वेदाभ्यासेन जीर्यते । कुलं तारयते तेषां दशपूर्वान्दशापरान् ॥
वेदाक्षरकुक्षिस्थमन्नं भक्तं मृताहके । प्रकुर्यात्रोदनं तेन कर्तुर्दोषो महान्भवेत् ॥
न्नयोग्यसमर्थे वेदस्ते गृहमागते । वयमेतत्कुक्षिगताः यास्यामः परमां गतिम् ॥
हे पितृप्त्यर्थं यदल्पं बहु वास्तु तत् । दीयतेऽनुपकारायं मेरुमन्दरसंनिभम् ॥
भरसमोघं स्यात्पितॄणां पूर्णतृप्तिदम् । वेदाक्षरपरित्यक्तलपनत्यक्तमोदनम् ॥
ऊत्यक्तसलिलरूपपलयमेति वै । सशाखायां दुर्लभेषु भोक्तॄनन्यान्निमन्त्रयेत् ॥

नातिचारान्नातिवृद्धान् नातिस्थूलान्कृशान्तराम् ।
अप्यल्पभक्षकान्भूयः गृह्णीयाद्बहुभक्षकाम् ॥

द्वा तु पितरः श्राद्धे ब्राह्मणं बहुभक्षकम् । दृष्टंप्वलभिया सद्यः कुर्वन्त्येव पलायनम्
ल्पभक्षणपरं ब्राह्मणं तं विलोक्य । न तृप्तिमधिगच्छन्ति तत्र श्रोत्रिय एव तत्
सलिलादेव नष्टक्षुद्दाहकश्मला. । श्राद्धादशाब्दा संप्राप्त महातृप्त्यैकनिर्भराः ॥

प्रभवन्त्येव तस्मात्तु वेदिनं तं निमन्त्रयेत् ।
वेदः साक्षाद्धरिः प्रोक्तं स वेदो यस्य सन्ततम् ॥
जिह्वायां हृदि वाऽऽस्येऽस्य वर्तते सहि चोदितः ।
साक्षान्नारायणः श्रीमान् तद्भुक्तौ किमु दुर्लभम् ॥

एकस्मिन्नपि वा लब्धे पित्रानन्दो भवेन्महान् ।
ब्राह्मणत्वादृशो भाव्यः कुलीनः क्रोधवर्जितः ॥
अदाम्भिकश्च कर्मिष्ठः श्रोत्रियः श्रोत्रियोद्भवः ।
सत्याग्यो ब्रह्मनिष्ठश्च सर्वपात्रोत्तमोत्तमः ॥
देवाग्निस्मृतवेदश्च वेदोज्झः परिकीर्तितः ।
क्रियानर्हः स विज्ञेयः स्याज्यः स्याच्छ्राद्धकर्मणि

स्वाधीनवेदः सततं पदक्रमविशेषवित् । तत्प्रयोगविशेषज्ञः विवि
अध्यापकवरिष्ठोऽयं नित्यप्रवचनोन्मुखः । याघसंख्या प्रतनघन प्रय
साक्षाद्दायक एवायं संहितामात्र पाठनात् । चानाध्यायस्तु ऋग्वेदे स
वेदाध्यायी तु विज्ञेयो स एव श्रोत्रियोऽपि वै । पदाध्ययनतो विष्णुः स
पदप्रकृतिरेतस्याः संहितायाः क्रमस्तु सः । संहिताकारकोऽत्यन्तं क्रम
साक्षाद्रुद्र इतिख्यातः क्रमाध्यायी तदंशजः । स्वरवर्णविशेषज्ञः
यजुर्वेदस्यैकदेशः ऋग्वेदः सामनामकः । तस्मिदानक इत्ये
ब्राह्मणेषूत्तमा ज्ञेयाः निखिलेषु महच्छ्रियः । देवद्विजर्षिमुनयः वि
संहितामात्रतोज्ञेयाः विप्राः सर्वक्रियार्हकाः । पदेन कर्मणा चापि

श्रमपरित्यागपूर्वकं ब्रह्मविद्विप: । तर्किण: शिल्पिनो गानपरानाक्षत्रकास्तथा ॥
वैणविकाः सर्वे वैदिकाः स्युर्विनाश्रुति: । वदिकानां समाजेषु सर्ववैदिककर्मसु ॥
अविक्रयपुरस्कारपूजाकार्यकरो नरः । भूयिष्ठान्यशुभान्येव विन्दते न तु संपदः ॥

अपूज्या यत्र पूज्यन्ते पूज्या यत्रावमानिताः ।
त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं ध्रुवम् ॥
यत्र नास्ति भयत्राता श्रोत्रियस्सजला नदी ।
आत्मसौख्यं यत्र नास्ति न तत्र दिवसं वसेत् ॥

शरणागतवित्तस्य नास्ति यत्र विधायकः । असंभावितदुष्कार्यजातदुष्कीर्तिभञ्जकः ॥
यस्मिन्देशे दुर्लभःस्यान्न तत्र दिवसं वसेत् । कुग्रामे कुत्सिते देशे दुष्टक्रूरजनाकुले ॥
वेदद्विड्जनभूयिष्ठे तिष्ठेन्नापि क्षणं द्विजः । तादृग्देशनिवासेन कल्याणानं भविष्यति
कल्याणानेन सततं कर्ममात्रं विनश्यति । तिथिभेदकृतंश्राद्धं पुनः करणमर्हति ॥
मासभेदात्पक्षभेदात्तथा तत्स्यात्ततोद्विजः । ग्रामेविद्वज्जनावासे निवसेत्कर्मसिद्धये ॥
कुर्वाणारालस्यकान्यनियोगादिनिमित्तकैः । ताम्बूलचर्वणजल प्राशनात्परतोऽपि वा ॥
गुलगुग्गुलकेक्षुफललाजादिभक्षणात् । परतो वा सार्धयामात्स्मृतं श्राद्धं तु तर्पणम् ॥
अरे वा सद्य एवायं सर्वसंभारसंभृतम् । निर्वर्तयेच्छ्राद्धकर्म येनकेनाप्युपायतः ॥

शक्तौ सत्यां सद्य एव कुर्याद्भक्त्या विचक्षणः ।
शक्त्याभावे उपोष्याऽथ पित्राद्वि पदके चरन् ॥

संकल्पस्यपुरतः अनाज्ञातत्रयं जपेत् । इदं विष्णु महामन्त्रत्रिराद्वारजपस्तथा ॥

व्याहृतीनां समस्तानां व्यस्तानां च सहस्रकम् ।
जप्त्वापश्चाच्छ्राद्धकर्म सम्यङ्निर्वर्तयेद्द्विजः ॥

सूतकनदोषे तु प्राजापत्यं विशोधकम् । यदिबालाः परं प्रातः कर्तारःश्राद्धकर्मणाम्
सद्यस्कृताहाराः स्युश्चेत्तु तदनन्तरम् । भुक्त्यन्तरं परित्यज्य परेद्युः प्रातरेव वै ॥

कुर्युः भुजिक्रियां मोहात्तद्विज्ञानात्परं तु ते ।
गुरुभिः बोधिताः सद्यः स्नात्वा पश्चाद्वयत्नतः ॥

वेदाभावे तु शिष्यं वा पुत्रं पौत्रं च विद्व(द्रूप)निम ।
आत्मानं भोजयेद्वाऽपि न विप्रं वेदवर्जितम् ॥
वेदिना पुरतो यो वा कुयुक्तिमन्तर्कवादिमः ।
पुरस्करोत्यवनंनया भ्रान्तोऽयं पातित्यः स्मृतः ॥
पुरतः श्रोत्रियाणां यो वेदत्यागपुरस्सरान् ।
कृतशास्त्रप्रयासान् नृन्भ्रान्तो ह्यर्चितुमिच्छति ॥

स दोषो संपरित्यज्य परं दुष्टान्न संशयः । कलौ प्रायेण सर्वत्र पुरस्कारो न वैदि
किंतु तत्तर्किणामेव पश्यन्त्यन्त प्रधानतः । शूद्रप्रायाश्च शूद्राश्च केवलं शुद्धतर्कि
वेदाध्यान्माहात्म्यादेव तिरस्कुर्वन्ति तत्कलौ । कलिधर्मपरो न स्याद्ब्राह्मणो वैदिकोत्त

कुशास्त्रभाषा शास्त्राणि प्रामाण्येन न विश्वसेत् ।
गानशास्त्राणि कृत्स्नानि नृत्तशास्त्राणि यानि वा ॥

सभारञ्जकशास्त्राणि तालगीतलयश्रिकाः । वैद्यशिल्पोडुशास्त्राणि ह्यैन्द्रजालीयकानि
वैदिकस्तत्परा ःसर्वा महावैदुष्यविभ्रयोः । प्रसक्तौ तादृशान्सर्वान्वेदमन्त्रबहिष्कृता
सन्ध्यामन्त्रैकविधुरान्पुनः श्रोत्रियरूपतः । तत्तत्कार्येष्वागतांस्तान्साम्येन न तु पूजये
पैतृकेषु विशेषेण मौञ्ज्यादिषु सवादिषु । श्रौतेषु स्मार्तकृत्येषु न साम्यादर्चयेदति
ब्राह्मणान्भोजयेदिति विधिकार्येषु सर्वतः । सन्तस्ते वैदिका एव मुख्यत्वेन सदा द्विजै

परिग्राह्याः पुरस्कार्याः न तादृक्शास्त्रधारिणः ।
ब्राह्मणानां धनं वेदा ऋग्यजुस्सामनामकाः ॥

तच्छिक्षास्तत्परं श्रौत्रकल्पा सूत्राणि तत्परम् । तत्प्रयोगपरिज्ञानं विनियोगपुरस्सरम
पश्चात्तदर्थजिज्ञासा तदर्थं तर्कचिन्तने । अभ्यासस्स तु कर्तव्यो न तत्पूर्वं तु तं नरः
अभ्यसेदितिकामेन ब्रह्मचर्येण वाडवः । सौम्यव्रतान्ते तर्कस्य समयो वेदचोदितः ॥
आग्नेयकाण्डात्परतो तद्व्रतस्य च मध्यमे । उक्तो व्याकरणस्यैवं मर्याद विधिरव्ययम्

एवं स्थितेऽत्र तां दिव्यां मर्यादां वेदनिर्मितम् ।
समुल्लङ्घ्य ब्रह्मचर्यं शुष्कतर्कादितत्क्रमाः ॥

दृश्रमपरित्यागपूर्वकं ब्रह्मविद्विषः । तर्किणः शिल्पिनो गानपरानाक्षत्रकास्तथा ॥
दौवैणविकाः सर्वे वैदिकाः स्युर्विनाश्रुतिः । वैदिकानां समाजेषु सर्ववैदिककर्मसु ॥
माधिक्यपुरस्कारपूजाकार्यकरो नरः । भूयिष्ठान्यशुभान्येव विन्दते न संपदः ॥

अपूज्या यत्र पूज्यन्ते पूज्या यत्रावमानिताः ।
त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं ध्रुवम् ॥
यत्र नास्ति भयत्राता श्रोत्रियस्सजला नदी ।
आत्मसौख्यं यत्र नास्ति न तत्र दिवसं वसेत् ॥

अवशागतचित्तस्य नास्ति यत्र विधायकः । असंभावितदुष्कार्यजातदुष्कीर्तिभञ्जकः ॥
यस्मिन्देशे दुर्लभःस्यान्न तत्र दिवसं वसेत् । कुग्रामे कुत्सिते देशे दुष्टक्रूरजनाकुले ॥
वेदद्विड्जनभूयिष्ठे तिष्ठेन्नापि क्षणं द्विजः । तादृग्देशनिवासेन कलाज्ञानं भविष्यति
कलाज्ञानेन सततं कर्ममात्रं विनश्यति । तिथिभेदकृतंश्राद्धं पुनः करणमर्हति ॥
मासभेदात्पक्षभेदात्तथा तस्यास्ततोद्विजः । ग्रामेविद्वज्जनावासे निवसेत्कर्मसिद्धये ॥
दुर्व्यापारालस्यकान्यनियोगादिनिमित्तकैः । ताम्बूलचर्वणजल प्राशनात्परतोऽपि वा ॥
शलाटुफलतक्रेक्षुफललाजादिभक्षणात् । परतो वा सार्धयामात्स्मृतं श्राद्धं तु तर्पणम् ॥
अपि वा सद्य एवायं सर्वसंभारसंभृतम् । निवर्तयेच्छ्राद्धकर्म येनकेनाप्युपायतः ॥

शक्तौ सत्यां सद्य एव कुर्याच्छ्रद्धया विचक्षणः ।
शक्त्याभावे उपोष्याऽथ पित्राहि पत्रके चरत् ॥

त्संकल्पस्यपुरतः अनाज्ञातत्रयं जपेत् । इदं विष्णु महामन्त्रत्रिशद्वारजपस्तथा ॥

व्याहृतीनां समस्तानां व्यस्तानां च सहस्रकम् ।
जपवापश्चाच्छ्राद्धकर्म सम्यङ्निर्वर्तयेद्द्विजः ॥

ग्युल्लङ्घनदोषे प्राजापत्यं विशोधकम् । यदिबालाः परं प्रातः कर्तारःश्राद्धकर्मणाम्
क्षादन्नकृताहाराः स्युस्चेत्तु तदनन्तरम् । भुक्त्यन्तरं परित्यज्य परेद्युः प्रातरेव वै ॥

कुर्युः शुजिक्रियां मोहात्तद्विज्ञानात्परं तु ते ।
गुरुभिः बोधिताः सद्यः स्नात्वा पश्चाद्व्रवर्त्मना ॥

गायत्रीं सलिले जप्त्वा सहस्रं वेदमातरम् । श्राद्धं कुर्याद्विधानेन निष्कृतेः परतः पुनः ॥
निष्कृतिस्मा प्रकथिता प्राजापत्यद्वयं तथा ।
गौरेका दक्षिणा देया ब्राह्मणाय महात्मने ॥
गृहीत्वाथो विदेशस्थः स्वदेशस्थोऽपि वा द्विजः । अनेककार्यशतकः संलीनोराजपीडया
समाक्रान्तश्राद्धकर्म विस्मृत्यैवावशात्पुनः ।
भुक्तेः परं वा भुक्तौ वा स्मृत्वा तसदनन्तरम् ॥
भुक्तमन्नं छर्दयित्वा स्नात्वाऽऽचम्य शुचिः स्वयम् ।
पावमान्यश्च कूश्माण्ड्यः शिवसंकल्पसूक्तकान् ॥
तान्पञ्चयमकं वापि पूर्वसूक्तमघोरकम् । नारायणं चोत्तरं वै जप्त्वनाश्नात भूर्भुवः ॥
उपोष्यतद्दिनंपश्चात्परेद्युः प्रातरेव वै । प्रातस्संध्यां साधयित्वौ कृत्वौपासनमेव च ॥
कूश्माण्डहोमं निर्वर्त्य पूर्वसूक्तं च तत्परम् । अष्टादशयजुर्मन्त्रान्हुत्वास्विष्टकृतः परम् ॥
मक्षोद्वासनतः पश्चान्नैचिकीनां त्रयं ततः । प्रदानं ब्राह्मणानां तु कृत्वा यद्वा तु दुर्लभे
तन्मूल्यदानं कुर्याच्च ततः श्राद्धं विधानतः । निर्वर्तयेदेवमेव न चेद्दोषो महान्भवेत् ॥
दर्शादिके विशेषोऽस्ति पिष्टान्नादिकभक्षणे । अज्ञानादथवात्रैवात्कृतेऽप्येतत्समाचरेत् ॥
अष्टोत्तरशतं जप्त्वा गायत्रीं वेदमातरम् । अनाश्नात्रयं पश्चात् व्याहृतीश्च त्रियम्बक
पूर्वसूक्तं च कूश्माण्ड्यः पावमान्यश्च तान्परान् । पञ्चरुद्रानौत्तरं च नारायणमनन्तर
क्ष्मापवित्रं चोपशान्ति दशशान्त्यादिकं क्रमात् ।
जप्त्वादर्भेपूपविश्य प्राङ्मुखेनैव मन्त्रवित् ॥
जले मग्नोऽथ वायुं स्वं निरुध्येव समाहितः । दशप्रणवगायत्रीं एकोच्छ्वासेन शक्तित
श्वासद्वयेन वा जप्त्वा तदुच्छ्वासत्रयेण वा । त्रिवारं प्रजपेदेवं तस्माद्दोषात्प्रमुच्यते
आभिर्गीर्भिः शतं नो चेदघमर्षणमेव वा ।
निमज्य सलिले जप्त्वा शक्त्या दद्याच्च दक्षिणाम् ॥
तस्माद्दोषात्प्रमुच्येत शुद्धः पश्चात्तु तत्पुनः ।
दर्शश्राद्धं प्रकुर्वीत हिरण्यामजलादिभिः ॥

अष्टोत्तरशतश्राद्धकरणापाटवो द्विजः । सर्वप्रकृतिमूलं तं दर्शं वा येनकेनचित् ॥
हिरण्याममधुक्षीर मुखैर्मन्त्रविधानतः । षड्देवताक्रमेणैव त्यक्त्वाऽऽलस्यादिकं तथा ॥
निर्वर्तयेद्विधानेन विषुवेऽयने तथा । महालयाख्यपक्षं च व्यतीपाते च मार्गके ॥

तृतीयामपि वैशाखे ब्राह्मणः पितृभक्तिमान् ।
यथाशक्ति यथोत्साहं पितृभ्यः प्रीतये बुधः ॥

दिनशून्यमकृत्वैव कुर्याद्ब्राह्मणभोजनम् । अधर्मकं सधर्मं वा सर्वप्राणेन वाडवः ॥
विप्रभुक्तिकरोविद्वान्सततं सर्वदेवताः । प्रीणयत्येव नूनं वै ब्राह्मणस्सर्वदेवताः ॥
इत्युक्तश्रुतिवाक्येन तस्माद्ब्राह्मणभोजने । कृतेऽस्मिंस्तेन पितरः परां तृप्तिमनश्वराम् ॥

प्राप्नुवन्ति हि ते कन्या येऽपि बर्हिषदोऽखिलाः ।
अग्निष्वात्ताश्च सोम्याश्च औमाऔर्व्याश्च सन्ततम् ॥

न विप्रभुक्तितुलितं कर्मास्ति जगतीतले । तेन सर्वक्रियाजन्यं फलानि लभते नरः ॥
अष्टोत्तरशतश्राद्धान्येतानि किल सूरिभिः । कर्तव्यत्वेनचोक्तानि सत्यां शक्तौ विशेषतः
अमामनुयुगाक्रान्त धृतिपात महालयाः । अष्टकान्वष्टकाः सर्वाः पण्णवत्यः प्रकीर्तिताः

प्रतिमासं प्रयत्नेन मासे श्राद्धानि यानि हि ।
मिळित्वा तैः पुरोक्तानि सर्वाण्यपि महात्मभिः ॥

अष्टोत्तरशतानीति गणयित्वेक ईरितः । अमामनुयुगान्तश्राद्धकान्वष्टकास्तथा ॥

महालयश्च क्लृप्ता हि तस्मान्नित्याः प्रकीर्तिताः ।
ये नित्यास्ते पिण्डयुक्तास्तद्भिन्नाः पिण्डवर्जिताः ॥
संक्रान्तिधृतिपाताख्याः अवरुध्रा अथ सन्ततम् ।
तस्मादपिण्डास्त्वेताः स्युः न नित्या इत्युदीरिताः ॥

पुनरन्यानि पुण्यानि श्राद्धान्याहुर्मनीषिणः । घृतश्राद्धं दधिश्राद्धं ग्रहणश्राद्धमित्यपि
तीर्थश्राद्धं पात्रयोगश्राद्धं वृषभनामकम् । पुनरन्यानि सर्वाणि देवयुक्तानि सन्ततम्
देवहीनानि सर्वाणि प्रेतोद्देशेन यान्यपि । तानि सर्वाण्यशुचिना निर्वर्त्यान्येव सर्वदा
अत्याज्यानि भवेयुर्वै कालप्राप्तानि केवलम् । तानि नैमित्तिकान्येव काम्यान्येवं बहूनि हि

परवर्णानि प्रजार्थानि त्रयार्थान्यपि तानि वै ।
पैतृकाणि महाभागे षड्विनानीति तान्यपि ॥
सूतशारौचदिवसनि प्रथमादिष्वनुक्रमात । तत्र त्रिमासिकेश्राद्धे भिक्षादानस्य केवलं
प्राधान्यं कथितं सद्भिः परणानन्तरं तदा ।
आसनं पात्रमात्रं स्याद्गन्धादि तु यथारुचि ॥
कृत्वा वाऽथवा दृत्वा भुक्तिपात्रेऽभिधार्य वै । अन्नप्रक्षेपणं कृत्वाभिधार्य च ततः परम्
यथासंभवशाकाद्यं सूपं चापि घृतं कृतम् ।
पयो वा दधि वा द्रव्यं भुक्त्यन्ते तृप्तये भवेत् ॥
तत्राम्रदाने गायत्र्या प्रोक्षणं देय स ... हरि ।
मन्त्रेण परिषिच्यान्नं पृथिवीतेति मन्त्रतः ॥
कुर्यात्तु चोदकप्राप्तं निखिलं तत्समापयेत् । एवमेव पुनः प्रातःकार्यं श्राद्धं द्वितीयकम्
मध्याह्नेऽत्र तु मर्याङ्क कलापैरिति तत्क्रमः ।
रात्रौ प्रातश्च भोक्तारः भिन्नान्येवेति बाडवाः ॥
तयोस्तु विश्वदेवास्तु कथिताश्च कृता कृताः । श्राद्धत्रयात्मात्सत्कारे उक्तं समवदानकम्
कृत्वाथवा च मेवस्याश्नीयाद्वा यथारुचि । एवं यः कुरुते श्राद्धं त्रिप्रायकसमाख्यकम्
जन्ममध्ये सकृद्वापि कृतकृत्यस्स एव हि । सोऽयं सर्वेषु दिव्येषु क्षेत्रेषु विविधेष्वपि ॥
यावज्जीवकृतश्राद्धः भवत्येवेति गौतमः । श्राद्धमात्र उशन्त्वस्त्वा मनुनेति भवेत्तदा ॥
आवाहनं पितृणां तु चार्यं तु न भृचा तथा । अपिण्डकेषु सर्वत्र नार्घ्यं नावाहनं तथा
सर्वत्र विहितं पादक्षालनं पाद्यमेव वा । आमश्राद्धे हिरण्ये च तत्पाद्यं तु कृताकृतम्
आसनं वरणं मुख्यं गन्धधूपादिकं न तु । सर्वोपचारकृत्याय दर्भा वा स्युस्तिला न चेत्
तद्दाने पृथिवीतेति ऋगेकाऽऽवश्यकी परा । सर्वमन्यं न किमपि तयोरेव विधिः स्मृतः
त्वं सोमेति द्वयं चास श्राद्ध आवाहने भवेत् । स्नातयोर्द्वयोरेव तदावाहनकर्म वै ॥
कर्तव्यंस्यात्प्रयत्नेन नमो व इति मन्त्रतः । नमस्कारः प्रकर्तव्यः तदाहाख्ये च रोदने ॥
अत्यन्तावश्यको ज्ञेयः प्रणामोऽष्टाङ्ग वर्त्मना । दाहश्राद्धे रोदने च न संकल्प उदाहृतः

योस्तु संगवः काल श्राद्धयोर्न तु तत्परम् । त्वं सोमपितृभिश्चेति ऋग्द्वयेनाभवेद्यथा ।।
आवाहनं पूर्ववत्स्याद्दाहेऽस्मिन्पितृकर्मणि । बर्हिषदः पितरश्चेति ऋग्द्वयं रोदने भवेत्
गहूताः पितर इति मन्त्रश्राद्धेऽति संकटे । आवाहनं प्रकथितमन्यत्सर्वं कृताकृतम् ।।
पिण्डश्राद्धपरतः नमो व इति मन्त्रतः । नमस्कारः पितृभ्योऽत्र कर्तव्य इति काश्यपः ।।
इदं पितृभ्यो मन्त्रेण घटकश्राद्धकर्मणि । आवाहने प्रकथितः सर्वमन्यत्तु चोदनात् ।।
वैशेयमेव विधिना आपत्कालेषु नान्यतः । यदग्ने कव्य मन्त्रेण स्वभुक्तिश्राद्धकर्मणि ।।
गावाहनं स्वयं स्वस्मिन्स्वयमेव विभावयेत् । तत्पिण्डदानात्परतः कृत्स्नाङ्गकरणात्परम्
आत्मभुक्तिस्तु विहिता तस्यामापोशनक्रियाम् । स्वयमेवस्वहस्तेन स्वहस्ते वै समाचरेत्
उत्तरापोशनेऽप्येवं विधिरुक्तो मनीषिभिः । पुत्रभुक्तिश्राद्धकर्म विशेषस्तं परैव सा ।।
इतिकर्तव्यता प्रोक्ता निखिला ब्रह्मवादिभिः । पादप्रक्षालनंकार्यमथवापाद्यकर्म तत्
प्रदानं तेन पात्रेण नात्मनो ह्यङ्घ्रिसेचनम् । न विपरीतोऽत्रदेयं स्यादासनस्यैव दानकम्
स्वमत्र ईहितो मत्तु मन्त्रेणावाहनक्रिया । प्रदक्षिणानुव्रजने वर्जयेदेष तत्र ते ।।

ताम्बूलं दक्षिणा ते द्वे चोदिते हि कृताकृते ।

अन्नशेषस्य संप्रश्नः संत्याज्यः किंतु तं स्वयम् ।।

तदुत्तरं विना तूष्णीं इष्टैर्बन्धुभिराचरेत् । तद्भोजनं यथावच्च शिष्टं सर्वं यथा क्रमात्
समनुष्ठेयमेव स्यात्रीतिरेवं हि तद्विदाम् । घृतश्राद्धं तीर्थयात्रा दिवसे क्रोशगाश्चरेत् ।।

मन्दिरे यस्यकस्यापि क्षीरं कृत्वा खलं क्रियात् ।

दानधर्मेण भार्यादिद्रव्याणामथवा गिराम् ।।

भ्रौव्यात्स्वामिनो वापि परस्परमतेन वा । दाक्षिण्यप्रीतियोगाभ्यां तत्र निर्णयेत्तु तत्
सुवर्णेनाथ वामेन शक्तिहीनस्य सा क्रिया । चोदितापदि धर्मज्ञैः दधि श्राद्धं तथैव च
क्षेत्रयागदिने तत्स्याद्गव्यूर्वा यत्र कुत्रचित् । नान्दीवत्तत्रापि दैवत्यं तच्च श्राद्धं प्रचक्षते
तीर्थश्राद्धं सदाप्रोक्तं धर्मज्ञैर्बहुदैवतम् । जीवश्राद्धं पश्चा ··· दैवतं तत्तु केवलम् ।।

विलक्षणं सर्वश्राद्धक्रियाभ्योऽतीव तन्त्रतः ।

तुर्यं विशन्नाश्रमं तच्छ्राद्धं कुर्यान्न चान्यतः ।।

वर्णी गृही वनी वापि क्रमसंन्यासकर्मणि । औत्रश्राद्धविधानेन कुर्यादेव द्विजोत्तम
आपत्संन्यासकार्येषु नियमा निश्चिता अपि । निवर्तन्ते द्विजातीनां प्रेषमात्रेण केवलम्
स संन्यासी भवेदेव भणितस्य महात्मनः । संन्यासाद्ब्राह्मणस्थानं सर्वशास्त्रेषु निश्चितम्

न संशयोऽत्र कर्तव्यः संशयी पापभाग्भवेत् ।
संन्यस्तानां कदाचित्स्यान्नाशौचं नोदकक्रिया ॥
भिक्षोर्मृतस्य कायोऽयं दर्भग्रन्थिहिरण्मयः ।
मुलितः सर्वदा प्रोक्त पवित्रः पावनो महत् ॥

नयं भस्मैकपुलिनः स्पर्शनादघनाशनः । सालिग्रामो यथा शुद्धः वज्रकीट वहिष्कृतः ॥
अत्यन्तैकमहाशुद्धः स्पृष्टमात्राघहारकः । कृष्णाजिनस्थापयं स्वधाशब्दवदेव वै ॥
अग्नीकार्यः पूजनीयः सर्वैरपि नरैरपि । वन्द्यः सेव्यो भावनीयः समस्कायां विशेषतः
नोपेक्षा दृष्टिमात्रेण तदर्हकृतिमात्रतः । शताग्निष्टोमसफलं नरः प्राप्नोत्यसंशयम् ॥
यतिक्रियाविशेषोऽयं पुत्रपौत्रप्रदायकः । तत्कर्ममध्ये तच्छीर्षभेदनादेव देहिनः ॥
अनेकजन्मसंलीनमहावन्ध्यात्वमोचिताः । पुत्रवन्त्यो भवन्त्येव तत्संततिरथात्र हि
ओषधिस्तम्बवद्वृद्धिं प्राप्नोति परमां तराम् । तच्छिरस्ताडननारिकेललेशस्य भक्षणात्
वन्ध्या पुत्रं लभेतैव शतवत्सरजीविनम् । तन्निवेदितवस्तूनां याचनापूर्वकेण ये ॥
कुर्वन्ति भक्षणं भक्त्या तेऽतिरात्रक्रतूद्भवम् । सुकृतं प्राप्नुवन्त्येव सदा तदनुयायिनः ॥
खननाख्योत्सवे पुण्ये महासुकृतपाकतः । संरभ्ये श्रेयसां हेतुभूते परमदुर्लभे ॥
पदे पदे प्राप्नुवन्ति दर्शादिफलमुत्तमम् । तदाभुवनतस्सद्यः परं तत्खननाच्छिवात् ॥
जाह्नवीस्नानशतकसंभूतं यत्फलं महत् । अवाप्नोत्यवशान्नूनं सत्यमेतन्मयोदितम्
यतेरेकादशदिने पार्वणश्राद्धनामके । संप्राप्ते तु तदा कश्चिद्यश्चिद्वास्यात्सुतेतरः
तदात्मानं ततोभूयः अन्तरात्मानमेव च । परमात्मानमुद्दिश्य कर्म तत्तु प्रसाधयेत् ।
पुत्रस्तु तातत्रितयं समुद्दिश्यैव तच्चरेत् । यतेस्तु ब्रह्मरूपत्वाद्ब्रह्मणः सर्वरूपतः ।
पित्रादिरूपं वस्वादिरूपं सर्वं च तस्य वै । संगच्छतेऽतस्तत्सूनुः पितृरूपेण तच्चरेत् ।

शिष्यादिकस्तथान्य(न्य)श्चेदात्मादित्रयरूपतः ।
तत्कार्यमिति धर्मज्ञसमयो विधिचोदितः ॥

ोऽह्नि तत्पश्चान्नारायणबलिः परा। तदुद्देशेन कर्तव्या तत्र साक्षाद्धरिः परः ॥

नारायणो देवता स्यात्पूर्वसूक्तविधानतः ।
पूजाहोमादिकः कृत्स्नः कर्तव्यत्वेन चोदितः ॥
द्वादशानां ब्राह्मणानां शास्त्रतः स्यान्निमन्त्रणम् ।
आराधनक्रिया पश्चात् त्रयोदशादिने भवेत् ॥

कभूतं समुद्दिश्य भिक्षुं मस्करिणं यतिम्। सिद्धिगतं परंहंसं करिष्ये राधनं दिति
 आदौ कर्तव्यः पश्चादत्र या देवताः। गुरुराद्यः प्रकथितः द्वितीयः परमो गुरुः
गुरुः पश्चात्पराप(प)रगुरुस्ततः। चतुर्थोऽत्र प्रकथितः कर्मण्याराधने सदा ॥
ी देवताः प्रोक्ताः पश्चात्ते केशवादयः। देवता द्वादश प्रोक्ताः शुक्लपक्षे न चेत्तथा

कृष्णे तु देवताः प्रोक्ता तथा संकर्पणादयः ।
केशवोऽत्र प्रकथितः पश्चान्नारायणः स्मृतः ॥
तृतीयो माधवः प्रोक्तः गोविन्दोऽथ तुरीयकः ।
पञ्चमो विष्णुरित्येव मधुसूदन एव हि ॥
षष्ठः प्रकथितः सद्भिः सप्तमस्तु त्रिविक्रमः ।
वामनः श्रीधरः पश्चात् हृषीकेशोऽत्र चोदितः ॥

दशा पश्चाद्दामोदर उदाहृतः। संकर्पणो वासुदेवः प्रद्युम्नश्चाथ कीर्तितः ॥
 चतुर्थः स्यात्पुरुषोत्तम इत्यथ। पञ्चमो देवता ज्ञेयः षष्ठोऽधोक्षज ईरितः ॥
तसंज्ञौ तो(तौ)देवौ पश्चात्प्रकीर्तितौ। जनार्दनस्तु नवमः उपेन्द्रो दशमस्ततः
शोज्ञेयः श्रीकृष्णो द्वादश स्मृतः। एतेषां वरणं कृत्वा पादौप्रक्षाल्य पाथसा
तः परचात्तत्पादसलिलं शिवम्। संगृह्य पाद पूजान्ते गोप्यं कुर्यात्र निक्षिपेत्

धान्यराशौ तण्डुले वा ततः पादौ स्वयं यतन् ।
प्रक्षाल्य पादावाचम्य तान्विप्रांस्तदनन्तरम् ॥

ा विधिना विष्टरासनपूर्वक. । उपचारैश्च निखिलैरर्चयेद्धरिबुद्धितः ॥
तत्पश्चात्समाराधनकर्मणा। परिवेषणतः पश्चात् गायत्र्या प्रोक्ष्य सर्वतः ।

सहस्रशीर्षं देवं पुरुषसूक्तं तदुत्तरम् । जपित्वैवंविधानेन तन्मुखेनापि तत्परम् ॥
वाचयित्वा महामन्त्रान्वैष्णवानतिपावनान् ।
तत्परं पूर्ववत्प्रोक्ष्य तदन्नाद्यखिलं च यत् ॥
देवसवितरिति तन्मन्त्रेणैव पतत्करः । परिषिच्य विधानेन पृथिवीतेति मन्त्रतः ॥
अभिमन्त्र्याखिलंवस्तुजालं पात्रप्रतिष्ठितम् । तत्करस्पर्शपूर्वेण संस्कृतात्परमेव वै ॥
अन्नत्यागं प्रकुर्वीत भोजयेच्चापि तत्परम् । भुक्तेः परं ब्राह्मणानां तीर्थराजार्चनं भवेत्
भुक्तिमध्ये ब्राह्मणानां सर्वोपनिषदामपि ।
वैष्णवानां च शैवानां मन्त्राणां वाचनं विधेः ॥
बलात्प्रकर्तव्यमेव तत्पूजान्ते द्विजन्मनाम् । महत्समर्चनं कृत्वा गन्धपुष्पादि दानतः ॥
ताम्बूलदक्षिणादीनां प्रदानात्परमेव वै । तत्तीर्थप्राशनं कृत्वा प्रदक्षिणपुरस्सरम् ॥
प्रणम्य दण्डवद्भूमौ भोक्तॄन्नमवान्द्विजोत्तमान् । विसर्जयेद्विधानेन प्रतिमासं ततःपरम्
आराधनाख्यमेवं स्यान्नकुर्यान्मासिकादिकम् ।
प्रतिसंवत्सरं तस्मिन्यतेः सिद्धिदिने सुतः ॥
तत्पार्वणविधानेन श्राद्धं कुर्याद्विधानतः । ब्रह्मभूतस्येति पितुः भवेत्सद्धि विशेषणम् ॥
संन्यस्तस्य न चान्यस्य भवेत्तद्धि विशेषणम् । तादृग्विशेषणानुक्तौ यादृशस्यपितुर्यतेः
तच्छ्राद्धं तद्दिने व्यर्थं प्रभवेदेव केवलम् । असंन्यस्तस्य तातस्य प्रोक्तौ तस्य सुताह
विशेषणस्य प्रभवेच्छ्राद्धं मूलदर्ं परम् । पितृशब्दात्प्रभूश्राद्धं संकल्पादिषु तद्दिने
दक्षिणमात्रेण नष्टं स्यादेतस्मात्सदानम् । उपरागश्राद्धकर्म तत्स्नानात्परमेव वै
पाकारम्भः प्रकर्तव्यः सम्पूर्णं सेव नं चरेत् । अत्यन्तबहुगुरुतरपदार्थानां परिग्रहः ।
नाश्यत्यन्तावश्यकः स्यात्किं स्वल्पानां परिग्रहः ।
प्रकर्तव्यो विशेषेण भोक्तणां यत्ननं परम् ॥
द्रव्यजातं सुसंपाद्यं त्वरात्वात्र हि धर्मतः ।
अक्रोधः परमः प्रोक्तः शौचं चापि यथा तथा ॥
प्रभूतमाज्यं भोक्तृणां दधिशाकचतुष्टयम् ।
मत्राय(न) (त्रयं) (द्वयं) चापि गुडं पायसमेव च ॥

मापापूपास्तिलापूपाः पिष्टापूपाश्च केवलाः । उत्तमत्वेन कर्तव्याः कात्रस्याद्विस्तरः परः
अत्र दर्भासनं मुख्यं क्षणश्चापि तथा मतः । अर्घ्यः कृता कृतोऽत्र स्यादर्घादिर्वस्त्रयुग्मकम्
एवमेव प्रदेयं स्याद्वस्त्राभरणजालकम् । विशेषेणात्र विप्राणां प्रदेयं स्याच्च शक्तितः ॥
दक्षिणात्र विशेषेण प्रदेया लोभशून्यतः । श्राद्धाङ्गतर्पणं चापि सच एवेति चोच्यते ॥
तस्मिन्नेव गृहेकार्यं तस्मिन्नत्यल्पके पुनः । तद्भुक्तिमध्ये तत्कुर्यात्तथा पिण्डक्रिया च सा
सर्वयत्नेन महता तस्मिन्नेव समाचरेत् । त्रिमुहूर्तादिके तस्मिन्नन्नश्राद्धं प्रचक्षते ॥
सोमोपरागे सूर्योपरागे च ब्रह्मवादिनः । ग्रहणेऽन्न श्राद्धकर्ता ब्राह्मणो धर्मवित्तमः ॥
ऋणत्रयाद्विमुक्तः स्यादधीताखिलवेदपि । समनुष्ठि तनिःशेष समतन्तुक्रियोऽप्ययम् ॥
भवत्यजातपुत्रोऽपि मुक्तस्यात्पैतृकादृणात् । एकब्राह्मणभुक्त्याऽत्र ग्रहणे चन्द्रसूर्ययोः ॥
ता अग्निहोत्राहुतयः वत्सरस्य महात्मभिः विंशत्युत्तर तत्सप्तशतानि प्रातरीरिताः ॥

१५ सायमाहुतयश्चापि तत्संख्याकाः पुनः शिवाः ।
कथिताः श्रुतिवाक्येन कृता एव भवन्ति वै ॥
सायं प्रातश्चाहुतयः एकस्य दिवसस्य ताः ।
चतस्र इति विज्ञेयाः वत्सरस्य तु ताः पुनः ॥
नवपाकाः संख्यया स्युः ता एतेन कृता ध्रुवम् ।
भवेयुरेव नास्त्यस्मिन्संशयोऽर्थे वदामि यः ॥

ब्राह्मणद्वयभुक्त्यात्र चतुर्विंशति संख्यया । कथिता इष्टयोऽब्दस्य कृता इत्येव निश्चिताः
ब्राह्मणत्रयभुक्त्या चेत्सन्निरूढपशोरपि । शारदामयणस्यापि करणे वत्सलं तु सन् ॥
कथितं श्रुतिवाक्येन तदवाप्नोत्ययं महत् । चिरवान्देवान्पितॄन्मातृदारैर्मातामहैरसह
यशेश्वरारुण्यपितॄन्समुद्दिश्य विधानतः । वरयित्वा विप्रमुख्यादसंकीर्णेन एव वै ॥

पृथक् पृथक् त्यक्तलोपः आमिश्रारहितस्तदा ।
प्रधानहोमतत्पिण्डप्रदानाभ्यां तदा यदि ॥
साग्निप्रयणकार्येण श्राद्धमेकं स भक्तिकम् ।
विचक्षणः करोतीह जन्ममध्येऽपि वा सकृत् ॥

सोऽयं महान्ति दानानि तुलादीन्यखिलान्यपि ।
प्राजापत्यादिकृच्छ्राणि व्रतानि विविधानि च ॥

।वेत्कर्ता तदा भूयः सर्वतीर्थं कृतालयः । कर्मणा तेन महता तुष्टोऽयं परमेश्वरः ॥
।र्वदेवमयो योगी ध्ये(योनारायणो)विभुः । तत्कालभिनात्मदत्वैह कृत्स्नयज्ञात्मको विभुः
।तुष्यनागकामुक्ति मदयादचिरेण हि । सर्वयागमयस्यास्य श्राद्धस्य करणात्किल ॥
।गेवंयातितुष्ट ··· ·· णा । प्रतुष्टश्चिरशुद्धिमना दत्वाऽस्मै भक्तवत्सलः ॥
।धणादिगुरुरेनैव ज्ञानं तद्ब्रह्मबोधकम् । उत्पादयित्वा तद्द्वारा कृतकृत्यं करोति हि ॥
।गाकालाश्च भगवान्वेश्माश्चस्वरूपिणः । मंडलयलोकानखिलान् पुरादेयो जगन्नि·
।पहीनो वेदरूपधरो नित्योऽयमच्युतः । इतिप्रत्किल (?) तस्मात्तु वेदो देवस्य ।
।द्धेदमन्त्रसाध्यत्वाद्यज्ञो वेदस्वरूप्यति । यज्ञस्यापि तथाकाले कर्तव्यत्वेन चोदन
।ालोऽपि वेदरूप्येव तन्मन्त्रैकनियोगतः । तत्रेदानीं तद्रामामित्येते पञ्चदशापि
।हूर्तानां मुहूर्ता हि पृथङ्मन्त्राश्च ते पुनः । एतर्हिक्षिप्रमजिरमाशुः पञ्चान्निमेष·
।णोद्रयन्नति द्रवन्त्वरस्त्वरमाण एव च । आशुराशीयान्जवश्च स्मृतः पञ्चदशाक
।तेषामपि सर्वेषां तया देवतया पुनः । अनुषङ्गः प्रकर्तव्यः इत्थंभावे तु सन्तत
।थैव वक्ष्यमाणानां मुहूर्तानां च कृत्स्नशः । अह्नां तथैव रात्रीणां तादृङ्मन्त्रैर्यजु
।ष्का उपधेयाः स्युः सावित्रचयने किल । सावित्रचयनाख्योऽयं कालरूपविशेषवं
।न्त्रैस्तैरुपधेयत्वात् कालरूप इतीरितः । एतेनायं मन्त्ररूपः वेदरूपश्च चोदित

स यज्ञो भगवान्साक्षात्कर्ता नारायणो विभुः ।
आभूर्विभूः प्रभूः शम्भुस्तत्कायः परमेश्वरः ॥
साक्षान्मुहूर्तास्ते प्रोक्ताः अह्नां पञ्चदशापि वै ।
चित्रकेतुः प्रभानाभान्संभानपि तथा ततः ॥
योतिष्मानपि तेजस्वानातपस्तदनन्तरम् । तपन्नाभितपन्पश्चाद्रोचनस्तदनन्तरम्
रोचमानश्च कथितः शोभनः शोभमानकः ।
कल्याणश्चरमः प्रोक्तः कालोमन्त्रात्मकःपरः ॥

महा च नामानि शुक्लपक्षस्य वै क्रमात्। तत्र संज्ञाननामेदं प्रोक्तं प्रतिपदस्ततः ॥
ज्ञाननाम पुनः द्वितीयाया भवेद्धि तत्। एवं क्रमेण प्रज्ञानं जानञ्च तदनन्तरम् ॥
भिजानत्पञ्चमं स्यादथज्ञेयं क्रमेण वै । संकल्पमानं प्रकल्पमानं ह्युपपदेन वै ॥
रमानं च विज्ञेयमुपक्लृप्तं च क्लृप्तकम्। श्रेयोवसीय आयुश्च संभूतं भूतमेव च
शुक्लस्य मन्त्राः स्युः क्रमेण न वेदतः । कृष्णपक्षस्य पतिपत्क्रमस्तथा ॥
मुहूर्ताः मन्त्रास्ते नामरूपाः सनातनाः। दाता प्रदाताऽऽनन्दश्च मोदस्तुर्यः प्रकीर्तितः
दः पञ्चमो ज्ञेयः पश्चादावेशयन्पुनः । निवेशयन्नेवमेव संवेशन इतिरम वै ॥
नस्सन्न इत्येव आभवन्निभवन्नथ । संभवन्नपि संभूतः भूतश्च चरमः स्मृतः ॥
न्त्राः शुक्लपक्षरात्रीणां चोदिताः क्रमात्। मुहूर्ता वेदविहिता रात्रीणां मनयश्चते ॥
या अथ भूयश्च क्रमेणैव महात्मभिः। दर्शा दृष्टा दर्शिता च विश्वरूपा सुदर्शना

आप्यायमाना तत्पश्चात् प्यायमानास्ततः पुनः ।
अप्याया सूनृतेरापि विज्ञेया तदनन्तरम् ॥

माणा तद्वच पूर्यमाणा च तत्परम्। पूरयन्ती च पूर्णा च पौर्णमासी क्रमात्स्मृता
क्षस्य तत्पश्चादह्ना तत्क्रमतः पुनः। मुहूर्तानां हि मनवः सविता प्रथमोऽत्र हि ॥

अथ प्रसविता ज्ञेयः दीप्तोऽयं दीपयन्नपि ।
दीप्यमानोऽज्वलन्पश्चात् ज्वलिताऽथ ततस्तथा ॥

संतपन्भूयः रोचनोऽथ तथैव च । रोचमानश्च शंभुश्च शुम्भमानस्ततस्मृतः ॥

अन्त्योवामश्च विज्ञेयः क्रमात्पञ्चदश (शैव) ते ।
अथाह्ना तस्य पक्षस्य मन्त्राः पञ्चदश क्रमात् ॥
विज्ञेयाः श्रुतिसंवेद्याः प्रस्तुतं प्रथमं स्मृतम् ।
विष्टुतं द्वितीयः स्यात् संस्तुतं तु तृतीयकम् ॥

विश्वरूपं च शुक्रं तत्परमेव वै। अमृतं च ततो ज्ञेयं तेजस्वी तदनन्तरम् ॥
मिद्धं तत्पश्चादरुणं भानुमत्ततः । मरीचिमत्ततोज्ञेयं तथाभितपदेव च
ततो ज्ञेयं कृष्णपक्षस्य तत्परम्। अह्ना मुहूर्तमन्त्रास्तु विज्ञेयाः

अभिशास्ताऽनुमन्ताऽथ चाऽऽनन्दो मोद एव च ।
प्रमोद आसादयंश्च पश्चात्तु स्यान्निपादयन् ॥
संपादयंश्च संशान्तः शान्तश्च तदनन्तरम् ।
आभूर्विभूः प्रभूः शंभूर्भुवश्चान्ते प्रकीर्तितः ॥
ता च सुन्वती चैव प्रसूता तदनन्तरम् । सूयमाना च तत्पश्चात् प्रोक्ताभिषूयमाणका
पीती प्रपा च संपा च तृप्तिश्चापि ततः पुनः ।
तर्पयन्ती ततो ज्ञेया कान्ता काम्या च चोदिता ॥
मजाताायुष्मती च पश्चात्कामदुघेतिते । मन्त्राः पञ्चदशप्रोक्ताः क्रमेणैवेति तत्क्रमः
वित्राद्या द्वादशैते पक्षाणां मनवो मताः । जयन्ताद्यास्तथा कृष्णपक्षाणां द्वादश स्मृताः
पवयिष्यन्पवित्रं च पूतो मेध्यो यशास्तथा ।
यशोयशस्वानायुश्चामृते जीवस्ततः पुनः ॥
जीविष्यन्नपि तत्पश्चात् स्वर्णलोकस्तथैव च ।
सहस्वांश्च सहीयांश्च चोजस्वान् सहमानकः ॥
यन्नाभिजयन्पश्चात्तथा संद्रविणः परः । द्रविणोदास्ततोऽज्ञेयः परश्चाद्राद्रपवित्रकः ॥
हरिकेशोऽपि मोदोऽथ प्रमोदोऽन्त्यः क्रमात्स्मृतः ।
पक्षे कालाख्यमन्त्राः स्युरिमे सर्वे सर्वत्र वै ॥
यागे क्षुद्रपर्वनेऽयरुणादिकचोदिताः । त्रयोदशापि ते ज्ञेया मासानामेव केवलाः
गर्भश्च मासस्य याच कोऽत्र तत्परम् । क्रमादेव सुविज्ञेया अथारुणरजाः पुनः ॥
पुण्डरीको विश्वजिच्च ह्यभिजिच्च ततः पुनः ।
आर्द्रश्च पिन्वमानश्चान्नवानपि तथा ततः ॥
यंश्च निरायंश्च गयांश्च हर्णीय वै । संभरश्च महस्वांश्च मासमन्त्रा उदीरिताः
दमन्त्रहोरात्रमुहूर्तैः संख्यया स्तु । चोदितः पष्टिसंख्याक कृष्णपक्षश्च तादृशः
अनन्ते षष्टिसंख्याकाः वत्सराः प्रभवादयः ।
द्वियमाना च घटिकाः संख्यायां षष्टिनः कृताः ॥

कलाश्च विकलाश्चापि षष्टिसंख्या प्रमाणतः ।
कल्पना एव विशेषेण सर्वेष्वपि वच्मि वः ॥

इति ··· पञ्चदश पक्षसंख्या प्रमाणतः । चोदिता. क्रिलभूश्च तासांवर्णाश्चते पुनः

पष्ट्यात्मनो वत्सरः स्याद्दिनानां संख्यया तथा ।
शतत्रयात्परं प्रोक्ताः षष्टिश्चेति मनीषिभिः (द्वात्मभिः) ॥

पञ्चसंवत्सरमयं जगदेतच्चराचरम् । ते पञ्चवत्सराश्चापि त इमे संप्रकीर्तिताः ॥

भवोऽव्ययो विलम्बी च पश्चात्साधारणः पुनः ।
दुन्दुभिश्चेति कथिता मूलभूतस्तु वत्सराः ॥

एतेषु वत्सरेष्वेव महामघ इति क्रमः । याऽश्चमे भवयुग्म युवस्य प्रसवस्तथा ॥

धातोः प्रयतिरित्युक्तः प्रसितोरीश्वरात्तथा । बहुधान्यस्यरीतिर्वै मतुः सोऽयं प्रमाथिनः

विक्रमस्यस्वरः पश्चात् द्विपोर्लोकस्य तत्परम् ।
श्राधा स्याचित्रभानोस्तु स्वभानोः श्रुतिरेव च ॥
धारणस्य तथा ज्योतिः पार्थिवस्य शुभस्ततः ।
अथ व्ययस्यमाणः स्याद्पानस्सर्वजितो हि ॥
सर्वधारिणोऽव्यालः स्याद्सुरश्चापि विरोधिनः ।
विकृतश्चापिचित्तं स्यात्खरस्याभीतमित्यपि ॥

नन्दनस्य कथितः विजयो मनप ·· । जयस्य चक्षुरित्युक्तं श्रोत्रं स्यान्मस्य मु
दुर्मुखिनोदक्षः हे विलम्बेश्वरंचमे । अङ्गोविळम्बिनः पश्चात्सद्दश्चापि विकारिणः
आयुश्च शार्वरिणः प्लवस्याथ जरा ततः । आत्मा चैव शुभकृतः तनूः शोभकृतः पुनः

क्रोधिनः शर्म च प्रोक्तं धर्मविश्वावसोस्तथा ।
पराभवस्याङ्गानि स्यात् प्लवङ्गस्यास्थानि चेति वै ॥
कीलकस्यपरूंष्येव सौम्यस्य शरीराणि च ।
साधारणस्य ज्येष्ठं स्याद्राधिपत्यं विरोधिकृतः ॥

परीधाविनस्य प्रमादीचश्च भामके । नन्दनस्याम एवं च ··· ··· ··· ॥

गभ्भयाणयाम्भग्याञ्जैमा चापि नरस्य च ।
महिमा पिङ्गलस्याथ फाल्गुनतेजसिमा च ॥
सिद्धार्थिनस्य प्रमिमा श्रोत्रियो धर्म तत्क्रमात् । दुर्मेन्द्रांशुगास्येति निर्गमः क्रमतो म
अथ वृद्धं दुन्दुभः स्याद्रुधिरोत्कारिणी वृद्धिः ।
सत्यं रक्ताक्षिगस्येति महाज्यक्रोधनस्य च ॥
अक्षयस्य जगत्येति प्रभवस्य धनं तथा । विभवस्य वराः प्रोक्ताः शुक्लस्य दिवधिरेव च
प्रमोदूतस्य च क्रीडा प्रजोत्पत्तेमोद एव च ।
आङ्गिरसस्य जाति स्यात् श्रीमुखस्य जनिस्मागम् ॥
एवं भूयः श्राद्धमयं यजुषो क्रमतो भवेत् ।
आवृत्तिरथ तथा प्रोक्ता पौनः पुन्येन नान्यथा ॥
सोमकानि यजूंष्येवं यत्सरीयाणि तानि वै । यत्सरा ऋषयस्तेषां तद्वद्ग्रहस्तथा
मन्त्राणामृषयोहैयाः देवता भगवान्विभुः । संकर्षणस्वरूपोऽयं योऽसावादित्य उ
वसमः पुरुषो दिव्यः देवता रुद्र उच्यते । एतन्मन्त्रात्मकः कालः यज्ञश्चापि तथापि
मन्त्रकालाखिलः सर्वमापोऽयं भगवान्हरिः । तुष्ट्ये देवदेवस्य सदा यज्ञैर्यजेत वै
ब्राह्मणोऽतो नित्यमेव यज्ञमध्ये वदामि यः । उत्तमः पैतृको यज्ञः तत्र सर्वेऽपि देवत
पितरश्चापि तुष्यन्ति ब्राह्मणोऽत्रादिकारणम् ।
महानाहवनीयः स्याच्छुचिः शौचसरस्वती ॥
स्थालीपाको यथा स्वाग्नौ क्रियते श्रुतिचोदनात् ।
तथा स्वाग्नौ स्वपाकान्नात्पैतृकं तत्समाचरेत् ॥
स्वपाकान्नश्राद्धकर्म योग्यताविधुरो द्विजः ।
सद्यः पातित्यमाप्नोति ब्राह्मण्यान्नात्र संशयः ॥
दुर्लभे ब्राह्मणानां तु कदाचिद्दैवयोगतः । देशापत्सु जनापत्सु चोरशत्रुभये
विश्वान्देवान्कूर्चमुखे समावाह्य च वा न चेत् ।
त्यक्त्वा वा पैतृकं कर्म मात्रमग्ने यथाविधि ॥

अन्नत्यागात्परं भक्त्या सर्वं कृत्वा ततः पुनः ।
··· दन्नं परिषिच्याऽथ गायत्री प्रोक्षणात्परम् ॥
प्राणादि पञ्चभिर्मन्त्रैः यावत् द्वात्रिंशदाहुतीः ।
पद्मावृत्या पुरोकृत्वा दानेनाथ समानतः ॥

द्वात्रिंशत्वस्यसिद्ध्यर्थं जुहुयाज्जातवेदसि । पिण्डदानं ततः कृत्वा श्राद्धशेषं समापयेत्
तु वा पैतृकं सद्भि पूर्वमार्गेण साधयेत् । नामेन कुर्यात्पित्रो स्वयत्स्मृत्याश्राद्धकर्मयत् ॥

स्वकृतान्नेन तत्कुर्यादित्यापत्स्वापि याज्ञयः ।
पित्रोः प्रत्याब्दिकदिने बन्धुभिश्चजनैः कृतम् ॥

नं तद्राक्षसं स्यात्स्वेषु सत्सुजनेषु चेत् । अपपात्रैः श्वभिर्दुष्टैः दर्शनं श्राद्धकर्मणः ॥
त्वा सूत्रशाखा शिखाभ्रष्टैर्विशेषतः । शाखारण्डैः नष्टवेदैः सन्ततं परिचक्षते ॥

वर्णिनः स्वजनाभावे संभोज्याश्चजनैः परैः ।
सद्भिः शिष्टैः कृतेनैव भक्तेन स्यात्तु पैतृकम् ॥

: ब्राह्मणाः स्युः संभोज्यान्ना स्वरूपतः । आचारतो वेषतश्च जनवादेन कीर्तितः
त्वं विदितं प्रभवेद्देव केवलम् । पुनस्संभाषमात्रेण वेदवर्णोक्तितस्तथा ॥
ाचर्यया च सत्वसत्वं च देहिनाम् । सुस्पष्टमेव प्रभवेद्वतो ब्राह्मण्यमेककम् ॥
सिगोप्यं च दर्शनादेव सन्ततम् । वन्दनीयं विशेषेण न परीक्षास्पदं भवेत् ॥
तु सर्वेषु परीक्षाऽऽवश्यकी परा । कन्यादाने च कव्ये च बन्धुत्वान्वेषणं परम्
वेव विनिश्चित्य प्रकुर्यात्तत्परं तत् । श्राद्धात्परं भूरिभुक्तौ स्वजनान्ब्राह्मणान्परान्

सज्जनानेव गृह्णीयादसतोऽत्र त्यजेद्बुधः ।
ये कर्मनिष्ठाः स्वजनाः सज्जनप्रतिपूजकाः ॥
पापभीता दयावन्तः शान्ता दान्ता जितेन्द्रियाः ।
स्नानसन्ध्या परा नित्यं वेदश्रोत्रियमानसाः ॥
अघातुकाः सुसंग्राह्याः सुसंभोज्याश्च भक्तितः ।
स ता श्राद्धात्परं भूरि भोजनं च यथैव सन् ॥

साक्षाच्छ्राद्धं प्रकर्तव्यं शुद्धचित्तेन सूरिणा ।
शुद्धचित्तस्त्यक्तलोभः शक्तिमान्सम्यगाचरेत् ॥
बन्धूनपि श्राद्धदिने भूरिभुक्तौ नटान्विटान् ।
गायकान्गाणिकान् शिल्पालिङ्गिनो वेषधारिणः ॥

ब्रह्मद्विषस्तान्ब्रह्मघ्नान्कर्कशान्दीर्घमत्सरान् । जनाक्रोशकरान्ग्रामहिंसकान्देवलानपि ।
उलूकव्रतिनो मूर्खान् बिडालव्रतिनोऽपि च । मित्रस्वामिगुरुद्रोहाभिरतान्देवदूषकान्(?)
देवस्वहारिणो ब्रह्मस्वामिद्रव्यहरानपि । स्वकार्यमात्रप्राधान्यपरमान् परघातिनः ॥

अभिशस्तानपभ्रंशान् पुरुपापरतांस्तथा ।
अभिनिम्रुक्ताभ्युदितान् कुण्डानपि च गोलकान् ॥

बहिष्कृतार्यान्ग्रामधर्मं विधुरान्देशधर्मतः । उज्झितान्परिवेत्तॄंश्च परिविविस्ति " योन्मुखान्
त्यक्तभार्यांस्त्यक्तमातृपितॄन्पुत्राद्यपोषकान् । विप्रवेषाद्विप्रमात्रान् नास्तिकान्यपलानपि

वैदिकाकारसुभगान् सन्ध्यास्नानबहिष्कृतान् ।
अपि सन्ध्यामन्त्रमात्रप्रयासविधुरान्पुनः ॥

कृतारयन्ताभिनयतः वैदिकत्वप्रसिद्धिगान् । वेदोक्तयपस्वरशतघोरवाक्यान्सभास्वपि
कुतर्कमात्रवचनो ह्यानियोग्यैकवेषिणः । न भोजयेन्नार्चयेच परिपक्तुसतो तथा ॥
कव्येषु कल्पभूतेषु वेदगैर्ब्राह्मणैः सह । अवैदिकान्शास्त्रधरान् अवकीर्णान्कुचर्मनः ॥

वार्धुषीन्मगजीवींश्च स्त्रीजितान्स्त्रीपरान्खलान् ।
भुजङ्गान्दक्षरमश्रून् बन्धुत्वेनागतानपि ॥

वर्जयेदेव दूरेण किंपुनर्मुक्तिकर्मणि । ब्रह्मघ्नो(हा) ब्राह्मणश्च वीरहा भ्रूणहा तथा ॥
गुरुतल्पगः पापी तत्संयोगी च पञ्चमः । तत्समाः पुनरन्ये च नैभ्रणीया हि तद्दिने
न तद्दिनसमं पुण्यं दिनमन्यन्न विद्यते । महात्मनो ब्राह्मणानां तत्कोटिमहणादिकम् ॥
तत्र दत्तमनन्तं स्यादण्डमेरुसमं भवेत् । देवा मनुष्याः पितरः नैभृ(भृं)ताध्यात्र केवलाः
नन्दन्ति किलमर्त्येऽपि पितॄणां सुहृदो हि ते । देवा अश्नन्ति पूर्वाह्णे मनुष्याश्चैव मध्यमे

अपराह्णे तु पितरः रात्रावेव तु राक्षसाः ।
ब्रह्मज्ञानी पण्डितो वा मूर्खो वाऽप्यथवाऽञ्जला ॥

शुनाहं समतिक्रम्य चण्डालः कोटिजन्मसु । प्रतिसंवत्सरं कुर्यान्मातापित्रोः मृते
पितृपक्षविधानेन श्राद्धं मन्त्रविधानतः । तद्विधानं परित्यज्य होमतन्त्रादिवर्जन
इतं यन्नभवेच्छ्राद्धं तथा तस्मान्न चाचरेत् । पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चै
मातामहस्य तत्पत्न्याः कलत्रस्य अपुत्रिणः । श्राद्धमात्रेषु सर्वेषु चान्द्रोमासः प्रश
चान्द्रसौरकयोर्योगे मुख्यं स्यादिति केचन । असंभवे चान्द्रमानः प्रशस्तस्स तु वैदि
धारणेमरणेनृणां तिथिस्तात्कालिकी वरा । मृतिकाले तिथिर्यास्यात्सामाह्या पितृक
महागुरूणां संस्थायां भार्याया मरणे तथा । भोजनं स्यादकालं आतुरं व्यञ्जनं
पितामहादिसुमहज्ज्ञातीनां मरणे पुनः । यथाशक्त्यैव कुर्वीत तत्प्रीत्यनुगुणेन वै ॥
मातुलस्य स पुत्रस्य श्वशुरस्य गुरोरपि । त्रिदिनाशौचविना सर्वं बन्धूनां हीनपुत्रि
मित्रस्य स्वामिनश्चापि भयात्त्रातुर्महात्मनः । अभावे कर्मकर्तॄणां कर्मकुर्यात्स्वयं

सपिण्डीकरणान्तानि कृत्वा श्राद्धानि कृत्स्नशः ।
त्रिदिनैरेवनिखिलं वत्सरश्राद्धतस्त्यजेत् ॥

पूर्णसूतकिना सर्वं सूतकान्तेऽखिलं भवेत् । नान्येषामिति सर्वेषां सिद्धान्तो मुनिभाष
दशरात्रात्परं पत्न्याः श्रुत्वा भर्ता विपर्ययम् । यावत्संवत्सरेकुर्यात् त्रिदिनाशौचमे

भर्तुः श्राद्धं तु नारीणां निखिलं स्यात्समन्त्रकम् ।
क्वचिद्द्विमुखेन तत्कार्यं न स्यादन्यमपि केचन ॥

यथा गार्हस्थ्यसंप्राप्तिः तस्याः पत्न्या विशेषतः । पुत्रश्राद्धसमत्वेन श्राद्धमौपासने
यथा पुनर्वह्निसिद्धिः तादृक्पत्न्याश्च पैतृकम् । सर्वमौपासने कार्यं वह्निसिद्धिर्यथा

तस्यालौकिकवह्नौ स्यात्पत्नीमात्रस्य केचन ।
लौकिकाग्नौ प्रशंसन्ति श्राद्धं पिण्डसमन्वितम् ॥

धर्मपत्नीं विना सर्वभार्यामात्रस्य पैतृकम् । संकल्पश्राद्धमप्येके प्रवदन्ति मनीषिणः
अत्र केचित् पुनः प्राहुः तच्छ्राद्धस्य महर्षयः । वैधार्यहारिणीमात्रे श्राद्धं वैदिकवह्नि

प्रकर्तव्यं विशेषेण यस्मात्सार्धशरीरिणी ।
सर्वाश्च सोमपीथिन्यो यद्भार्यास्त्रिपञ्चषाः ॥

मासो वैदिक वह्नौ स्यादब्दं पितृमर्मणाम् ।
संसर्गदोषशून्यानां तद्भव्यानां प्रशास्यते ॥

अब्दाद्दं तत्करं भवां प्रकुर्यांल्लौकिकानले । पूर्वमेवाग्रामासानां सर्गितस्य यथा
सम्यगनुगुणेनैव ततब्दाब्दं समाचरेत् । जन्मावमानसमता राशेश्चैत्रादिना
यथेसदेव तं नाम मेषादीनां न चैन्न तु । मेषादीनि तु नामानि राशीनामेव केवल

समानानां कदाचित्तान्नामनामानि तानि हि ।
दर्शान्ताः पूर्णिमान्ताः शून्याः प्रतिपन्मुखाः ॥

त्रिंशतिथिः पक्षयुगं कृष्णाप्रभपवृद्धिकः । मासनामानि चैतानि राशीनां पतते न
सर्वथैव ततस्तेषां पृथङ्नामाख्या राशयः । मृताहलक्षणं तत्तु युज्यते न तु राशि
एवं हि लक्षणं तत्र सर्वशास्त्रेषु(?)निभिन्नम् । मासपक्षतिथिस्पृष्टे यो यस्मिन्म्रियतेऽह
प्रत्यब्दं तु तथाभूतं मृताहं तस्य तं विदुः । पक्षद्वयात्मको मासः ऋतुर्मासद्वयात्मकः
ऋतुः षडात्मकश्चाब्दः मधुर्माधव एव च । वसन्त इति वेदोक्तः शुक्रश्च शुचिरेव च
ऋतुर्ग्रीष्म इति प्रोक्त नभोनभस्य एव च । वर्षा इति समाख्यातः इषश्चोर्जश्च शारद

सहश्चापि सहस्यश्च हेमन्त इति चोदितः ।
तपश्चापि तपस्यश्च शिशिराख्यो महात्मभिः ॥

मासपक्षर्तवः सर्वे तिथयो निखिला अपि । पक्षद्वयनिरूपणानि चान्द्रमाने तदात्मनि

सम्यक् घटन्ते ते सर्वे न सौरे तु कदाचन ।
अतस्तेनैव मार्गेण श्रुत्युक्ते साखिलाः क्रियाः ॥

विशेषज्ञः प्रकुर्वीत न चेत्कर्माखिलं तु तत् । वैगुण्यमेव लभते अतः श्राद्धं च तादृशम्
मृताह एव कुर्वीत तदतिक्रमणेन तु । प्रत्यवायं महान्तं तं लभते ब्राह्मणक्षमात् ॥

पित्रोश्च मातामहयोः तुलिते श्राद्धकर्मणि ।
न पितामहयोश्चेति श्रीमान् शातातपोऽब्रवीत् ॥

अपुत्रस्य पितृव्यस्य भ्रातुश्चैवाग्रजन्मनः । प्रत्यब्दं लौकिके वह्नौ तत्पत्न्योरपि वैधतः
तत्पत्न्याः प्रपितामहयोरपि । कृते कर्मण्यपि ततो वर्षश्राद्धं कृताकृतम् ॥

रिश्राद्धे न वै यस्मात्कर्मणि प्रतिवत्सरम् । क्रियातो स्मृतो मन्त्रैः ततस्ते तु कृताकृते
नित्रोश्च मातामह्योः सपत्नी मातुरेव च । श्राद्धान्यकरणात्तस्य चण्डालत्वैकदानि हि

मृताहश्राद्धमेकं तु न हिरण्यादिना चरेत् ।
कदाचिदपि यच्च्यैतत्तित्वन्नेनैवतच्चरेत् ॥

ग्नौ करणंमुख्यं ब्राह्मणानां च भोजनम् । पिण्डप्रदानं तत्पश्चात् त्रयमेतत्तु पैतृकम् ॥

तत्र होमस्तु मुख्यः स्यात्तच्छेपेण ततः पुनः ।
स्वधेयमिति मन्त्रेण ह्यभिघार्यास्य पार्वणे (पर्णके) ॥

शेवारमन्नं निक्षिप्याभिघार्यं च पुनः तथा । मेरुण प्रहरं कुर्यात्तस्मिन्नौपासनेऽनले ॥
स्थालीनां तदन्नं तु सोममेधो मधूनि वै । मेरुमन्दरतुल्यानि पितृणां संभवन्ति वै ॥
श्येयान्नैकरहितश्राद्धं यत्त्वयाप्रमादतः । वृथा श्राद्धं भवेत्सद्यः तच्छेपेण भवेत्ततः ॥
श्रावपिण्डकरणं नैवेत्पिण्डं वृथा भवेत् । लौकिकैर्वैदिकैवाग्नौ श्राद्धपाकं विधीयते ॥

## श्राद्धे पाककर्तारः

प्रजावती मातृभार्या ज्ञातिपत्न्यादिकाः स्वकाः ।
मुख्याः स्युः पाककार्यस्ताः तदाशौचानुगुण्यतः ॥

बन्धूनां पाककरणंज्ञेयं स्यादुत्तरोत्तरम् । यथा वा शौचसंबन्धः गोत्रिणामप्यगोत्रिणाम्
प्रवर्तते तथा ज्ञेयोऽधिकारः पाककर्मणि । श्राद्धकर्मसु विज्ञेयः स्मृ ` ` महात्मभिः ॥
तादृक् पाकाधिकारैकजनाभावे स्वयं बुधः । पाककर्म यथाशक्ति कुर्यादेव स तादृशः
पाकोऽयं श्राद्धदेवानां पीयूषशतकाधिकः । प्रेतकर्मसु सर्वत्र बन्धूनामधिकारिता ॥
दशास्वपि दिनेष्वेषु न स्त्रीणामिति देवलः । पतिसङ्गविहीनानां विधवानामथापिवा
अधिकारः कर्तरि तु बालेऽस्मिन्ब्रह्मचारिणी । नग्नश्राद्धे नवश्राद्धे षोडशश्राद्धकर्मणि
तथा वृषोत्सर्जनेऽस्मिन् सपिण्डे प्रेतकर्मके । पाकाधिकारः कथितः विधवानां विशेषतः
तेषु श्राद्धेषु नितरां कर्तृणामेव केवलम् । परेषां पुरुषाणां वा बन्धुष्वेवाधिकारिता
प्रेतकृत्येषु सर्वेषु चिरण्टी दूरगा भवेत् । परं सपिण्डीकरणादानुमानिककर्मसु ॥

चिरण्टीनां पाककार्येऽधिकारः स्यान्न तत्पुरः । पाकं यद्यसमीचीनं कारये ··· मः

मोहेन कुरुते श्राद्धं पितरस्तस्य तत्क्षणात् ।
वातापील्वलमन्दष्ट्राः खण्डिता भक्षितास्तथा ॥

सन्दग्धा मूच्छितानष्टाः भवेयुर्नरकाश्रयाः । ···· समीचीनं पाकेऽस्मिन्प्रतिपादितः
विभिन्नसूतकिकूलं गर्हितं शास्त्रजालकैः । ये भिन्नसूतकाचाराः भिन्नभाषा परिग्रहाः
श्राद्धपाकक्रियानर्हाः त ·· कीर्तिताः । तत्पश्चं श्राद्धशिष्टान्नं श्राद्धकर्ता परित्यजेत्
श्राद्धात्परं च यत्नेन तत्पूर्वं सुतरां किमु । विभिन्नसूतकाचारान् आमानयनकर्मसु ॥
संयोजयेन्नपाकादि क्रियास्तत्र कथंचन । इष्टभोजनकार्येषु श्राद्धभिन्नेषु तद्दिने ॥

योजयेत्स्वजनाभावे भिन्नसूतकिनो जनान् ।
भिन्नाशौची भिन्नवेषी भिन्नभाषापरिग्रहः ॥
जनभाषा विकारी च श्राद्धकर्मसु गर्हिताः ।
पाकक्रियायां सुतरां संत्याज्याः पितृदुःखदाः ॥

ते सर्वे कथिताः सद्भिः अभिश्रवणकर्मणि । पादप्रक्षालनागारलेपनादिषु वस्तुनाम् ॥
आमानां फलमूलाग्निगोमयानयनादिषु । पाकात्परं तु ज्ञातीनां शुद्धानां स्पर्शनेऽधिकः

अधिकारोऽस्तिसन्धूनां नान्येषामिति निश्चयः ।
पिण्डोद्वासनतः पश्चात् पिण्डानां भिन्नगोत्रिणाम् ॥

अधिकारः स्पर्शने स्यात्तन्दिष्टतिलदर्भयोः । संस्पर्शनाधिकारः स्याद्विप्रमात्रस्य वै सतः
नासतस्तु कदाचित्स्यादग्न्यानयनकर्मणि । ऋत्विजां मुख्यकर्तृत्वं स्वसमादपि विशेषतः
कथितं भस्मनिर्दग्धैः समिदाहरणे तथा । भिन्नभाषो भिन्नवेषः शिखाभिन्न कुकच्छकः
अभिद्रवागनामृवश निन्दितःश्राद्धकर्मणि । एतद्धस्तस्पर्शनेन पक्वमन्नं सुनिन्दितम् ॥

स्वश्मांभाग एव स्यान्न पितॄणां तु तद्भवेत् ।
समानसूतकाचारा भिन्नकच्छा यता जनाः ॥
व्यत्यस्तनारीसंयानाः पितॄणां भयदायकाः ।
व्यत्यस्तकच्छाचाराग्निशिखाद्दूरी कृता जनाः ॥

पितॄणां नेत्रपीडायै इयमात्रा भवन्तिते । दिव्यभाषाश्रवणतः येषां केषां तु तां तु ते
रा ··· जायतेऽत्र दिव्यां वा ··· तः । ·· च येद्वा विशेषेण न भाषा वाचयेत्पराम्
तो यत्नेन विबुधः यत्तो नो पितृकर्मणि । दिव्यभाषानधिकृतः भाषयात्र स्वकीयया
यत्नेन न ··· ··· ··· खिलाम् । तद्दिने वैदिकं शास्त्रं विशेषेयोपद्यं हयेत् ॥
मीमांसा चेतिहासं चरणव्यूहसंज्ञिकाम् । तथा सत्य तपो वश्यं तद्विभाकशास्त्रकम्
राणस्मृति ना ··· ··· द्विजन्मनाम् । भुक्तिकाले विशेषेण रक्ष्योच्चं प्रथमं ततः ॥

वैष्णवाः पावनाः श्रीकाः पैतृकाः पितृवल्लभाः ।
तान्छ्रावयेद्विशेषेण घण्टानादं विशेषतः ॥

वालंको···शब्दं उच्चैर्घोषं च वर्जयेत् । गाधा(था)विशेषांस्तत्काले प्राकृयान्प्रवर्जयेत्
केका प्रकृताभाषा पामरीया परोत्कटः । अपि साक्षाद्वेदेवगुणवृन्दसुबोधकाः॥
नात्तद्दिनेदूरात् त्यक्तव्याः स्युर्हि वैदिकैः । वेदसाम्यं प्रकथितं वेदस्यैव महर्षिभिः॥
मय यस्यकस्यापि कल्पसूत्रादिकस्य च । एवं सति पुराणादेः तत्तु दूरत एव हि॥
स्यानां तु मन्त्रत्वे यथाकाष्ठमृगस्य वै । मृगत्वव्यपदेशोऽयं तथैवेति हि निर्णयः॥
तति पुनस्तत्तद्भाषाग्रन्थस्य वेदता । अतिपामरलोकोक्तिकल्पिता सातिगर्हिता
रणतः सद्यः श्रवणाद्वा द्विजन्मनाम् । जातिभ्रंशो भवेन्नॄणां वेदानर्हत्वदायकः॥

## भाषान्तर प्रवचननिषेधः

सर्वभाषासु लोकेऽस्मिन्पामरा वेदनिन्दकाः ।
वैदिकाख्या नाममात्राद्भाषाग्रन्थकृतश्रमाः ॥

ामन्थविश्वासमात्रेणैव हि तान्यपि । वेदतान्तां वर्णयन्ति वेदमाहात्म्यशून्यतः

स्वेषामस्यन्तमूढास्ते वेदानधि कृतो हि ते ।
तेनैतान् ··· ··· त ··· भाषाग्रन्थजालकान् ॥

विशेषेण ते तथा गतबुद्धयः । न ब्राह्मणसमः कश्चिन्न तु वेदसमः परः॥
सर्वशास्त्रसिद्धो ब्रह्मविदीरितः । ब्रा(ह्मणस्य च)शूद्रस्य···तत्सत्कर्मार्थवादतः
४

यक्ष्यामि लक्षणं तेषामेवास्ति किल मुख्यतः ।
काशाः कुशा यथा दूर्वा उशीराश्चल्वजास्तथा ॥
विश्वामित्राभिधाः पश्चात्सुगन्धीतेजनाः परे ।
मुञ्जाख्यश्च तथा दूर्वा दर्भा दशविधाः स्मृताः ॥

## दर्भाहरणकालः

पिकान्ते दर्शादिने संगृहीताः प्रयत्नतः । दर्भास्तावत्पुनः पश्चान् संग्राह्याः सर्वकर्मसु ॥
ास्त्वन्यासु ये दर्भाः संगृहीतानि ते तथा । मासमात्रं तु संग्राह्या नाधिकं तु कदाचन

मन्दवारे तदाश्वत्थात्संग्राह्याः समिधस्तथा ।
नान्यवारेषु तस्मात्तु यतो स्पृश्यस्स तु द्रुमः ॥

ाह्नः खड्गपात्रं च तथा नैपालकम्बलः । रौप्यं दर्भास्तथा गव्यं दौहित्रश्चाष्टमः स्मृतः
येते यतस्तस्मात् कुतपा इति विश्रुतः । मुख्यस्स कुतपः कालः विशेषाः श्राद्धकर्मणि
दानस्य परमः तत्र दत्तं तदोदनम् । साक्षादमृतमित्युक्तं पितृणामक्षयं भवेत् ॥

श्राद्धब्राह्मणभुक्तयथा स्वीकृतान्नक्रिया वधूः ।
श्मशानोल्का समानैव तत्पतिश्च तथाविधः ॥

यत्पक्वमन्नं सलिलं यदानीतं स्वहस्ततः । पैतृकब्राह्मणायोग्यं तज्जन्म व्यर्थमेव हि ॥
श्राद्धब्राह्मणभोज्यानां वस्तूनामपि चैककम् । अदृष्टमस्पर्शयितमप्रोक्षितममन्त्रितम् ॥
पितृणां तदनास्वाद्यं हालाहलसमं भवेत् । यददृष्टं श्राद्धकर्ता परं पक्वान्नयत्नतः ॥
पितरस्तं [illegible] गृह्णन्ति स्वपुत्राद्दृष्टमित्यति । तस्मात्प्रीत्या [illegible] तेनैतद्वीक्षितं यस्ततो हि न
प्रीति दत्त ··· ··· योग्यं स्थिरं स्थिरम् । परित्याज्यं विशेषेण चेतीदं मन्यते हि वै
मन्त्राः स्पर्शयितं भक्तं पितृणां स्पर्शनाक्षमम् । प्रभवेदेव सुतरां तस्मात्तत्स्पर्शयेत्करात्
हविषः प्रोक्षणं ··· ··· गायत्र्यादौ महर्षिभिः । अर्चनादौ प्रकथितं द्वितीयप्रोक्षणं ततः
सुक्तिमात्रक्षिप्तमात्रात्तथापायसयोरपि । अभिघारः प्रोक्षणं च गायत्र्या
द्वितीयप्रोक्षणं तस्य हविषे विधिचोदनात् । प्रकर्तव्यं प्रयत्नेन न चेत्तत्पितृवल्लभम् ॥

न भवेदेव हव्यं च स्वीकर्तुं तैर्न शक्यते । तस्मात्तदन्नमुक्तस्य पठनात्पूर्वमेव वै ॥
प्रतिपात्रप्रोक्षणंतत् तत्पश्चाद्दर्भगोपनम् । अन्नमात्रस्य कर्तव्यं न तु पायसभक्ष्ययोः ॥

भुक्तिपात्रात्तु विप्रस्य दक्षिणे कुक्षयोर्द्वयोः ।
आज्यपात्रं स्थापयित्वा तस्मिन्कर्ता स्वहस्ततः ॥

प्रभूताज्येन योग्येन सुगन्धेन प्रपूरयेत् । तावन्मात्रेण पितरः मोदन्ते तेहि तर्पिताः ॥
प्रभयन्ति न चेत्ते वै तोपं न प्राप्नुवन्त्यपि । वस्तूनामपि सर्वेषां परिवेषणतः परम् ॥
अन्नत्यागात्पूर्वमेव प्रोक्षणं परिषेचनम् । सत्यं त्वर्तेन मन्त्रेण कृत्वा तत्परमेव वै ॥
भुक्तिपात्रं स्वहस्तेन प्रगृह्याऽथ मनुं जपेत् । पृथिवीतेत्युपक्रम्य भुक्तौ त्यागं समाचरेत्॥
न चेदेतच्छ्राद्धभक्तं हव्यलोक्ति हि तत्क्षणात् । एवं त्रियारोधरितगायत्रीप्रोक्षणैः परैः
भोक्ता प्रोक्षणतश्चापि तदन्नं पितृभुक्तये । तत्तृप्त्यर्थं प्रभवति तद्विष्णुपददायकम् ॥
प्रजायते क्रमेणैव तद्गायत्रीप्रभावतः । पादप्रक्षालनं श्राद्धे गायत्री प्रोक्षणादिकम् ॥
सार्चनं भोक्तृहस्तस्य ··· रागिणो सतः । नित्यस्त्रयद्वालाजलजालकस्याशुचेरपि
दुर्गन्धधर्म्मणो दुष्टश्वेतकुष्ठकरस्य च । कृष्णकुष्ठस्य तद्विन्दुचित्रकुष्ठस्य दूरिणः ॥
महातिसाररोगस्य बहुमूत्रस्य सन्ततम् । निषिद्धं शास्त्रतो ज्ञेयं किंतु तेषां प्रचोदितम्
संकल्पात्परतः सर्वं शिष्यर्त्विक्पुत्रदुर्गतः । कार्यमेवेति विबुधैः पयनव्याधिकस्य च ॥
अत्यन्ताक्षररुद्धस्य मूकान्धबधिरात्मनाम् । तादृशाः फलकृत्येषु संत्याज्या दूरतः पुनः
तत्करस्थकसलिलमतिद्वेयं दुरासिकम् । अपिवेयमसंभाव्यं मनसोऽतिजुगुप्सितम् ॥
चण्डालभाण्डसलिलतुल्यं प्रभवन्ति तत् । तदभिकरणंचापि तदीयानलकैः परः ॥
तत्कर्तव्यत्वेन कुर्यात्तच्छिष्टान्नं च तत्परम् । स्वे कृत्ये ··· शिष्टं पैण्डाय योजयेत्॥

पिण्डदानं तु तद्धस्तात्कारयित्वाऽथ सात्वतः ।
अपोभ्यवहरेत्तेषां पिण्डानां विप्रभोजने ॥

तुसंभारा ··· ··· ··· । न कार्यं पिण्डदानं तत्किरबन्यमुन्नतरचरेत्॥
सर्वेषं तद्गृहस्य तद्धेम्नेन कृताहृनम् । प्रभवेदेव सुनरां तद्धेम्नेन न मुच्यतः ॥
र्वेरन्येषु तद् (ज्ञ)ज्ञेयं ··· ··· । ··· गर्भशास्त्रौम्नप्रतीदपेत्रं ··· मुनिरिषमम ॥

उत्पन्ने संकटे घोरे चोरव्याघ्रभयाकुले । मन्त्रमात्रे ·· मा श्रुति
प्रेतमात्रोच्चारणेन गन्धादीं पूर्यते परः । गन्धाद्यात्मकक्षणं स्थानं मन्त्रगात्मते नरः
न गात्र दहनं कार्यं वैधुर्येऽधिक कर्मण । पूर्वसूक्तविधानतः
समर्पणं प्रतिदिनं धूपदीपादिभिरपि । नैवेद्यं परमान्नं स्याद्भक्ष्यभोज्यफलैरपि
तर्पणं पयसा कुर्याद्दात्मवी ·· · · । · · दात्मा मयाद्य उच्यते

अन्तरात्मा द्वितीयः स्यात्परमात्मा तृतीयकः ।
जीवात्मा परमात्मा वा चतुर्थ इति भाषितः ॥

एकादशेऽह्नि संप्राप्ते पायसं तु विधीयते । (नारायण ?)बलिः पश्चाद्द्वादशेऽहनि तत्परं
आराधनाख्यं कर्मान्यत् मासिमास्येवमेव हि । मृताहे तद्द्वयं कार्यं प्रतिसंवत्सरं च
तत्कदाचित्तु दैवेन ·· पितम् । जायते तत्परं ज्ञेयं पङ्क्ति बाह्यं भवेदपि ।
सं भ्रष्टपङ्क्तिकं तूष्णीं विना तां निष्कृतिं परम् । न शक्यते तं स्वीकर्तुं ब्राह्मणैर्धर्मवृत्तिभिः
···· तिरस्ता यथा योगं तत्तत्कार्यानुरूपकम् । प्रकुर्यात्सभवेच्छास्त्रमार्गेणैव न चान्यतः
शास्त्रज्ञैरशास्त्रदृष्ट्यैव निष्कृतिस्मात्कृपालुभिः । अदुष्ट ··· ··· भूतदयापरैः ॥
संत्यक्तमत्सरैरेव प्रकल्प्या प्रभवेत्सदा । संजाते संशये सर्वजनानां चित्तकर्मणि ॥
सतोन्यथाकृत्य दुष्टात्मा स्वयमज्ञो जडः खलः । सं ··· ··· दण्ड्योभवति भूभृताम् ॥

यस्मिन्ग्रामे यत्र देशे विदुषः शास्त्रपारगान् ।
सभामध्ये जडो रोषाद्भुक्कृत्य न्यक्करिष्यति ॥
दण्ड्यः सद्य एवस्यान्नोपेक्ष्यस्तु कदाचन ।
कार्यप्राधान्यतो यो वा दुष्टं सज्जननिन्दकम् ॥
करोत्युपेक्षां मोहेन सोऽल्पायुर्भ्रश्यते श्रियः ।
राजा दुष्टं सज्जनानां निन्दकं समभाषिणम् ॥

तैस्साकं तं वलाद्गृह्य देशादुच्चाटयेन्नृपः । दुष्टं श्रोत्रियरूपेण पैतृकेषु चिराश्रयात् ॥
श्राद्धभुक्ति प्रकुरुते तस्य जिह्वां यमः स्वयम् । छिनत्तिखड्गमुद्धृत्य तथा नक्षत्रजीविनम्
शूद्रजीवी सर्पजीवी भिषजीविऽपणिर्घृणिः । खड्गजीवी शस्त्रजीवी शूलजीवी वलमही

